क्रीडाकाङ्क्षिणि कुञ्जरे कृतपदस्तं देशमाक्रान्तवान्।
यत्रानेन करिष्यते प्रतिपथव्यावर्तिताम्भोभर-
भ्राम्यद्वीरकरङ्कसंकटतटा सा कृष्णवेणी सरित्॥ ७१॥
अवनितिलकस्तत्रावासं विधाय सरित्तटे
घटयितुमिमं साम्नैवाभूदुपायपरायणः।
कुटिलहृदयः सन्नेतस्मान्न सान्त्वनमग्रही-
द्भवति हि मतिर्भाग्यभ्रंशे नितान्तमनङ्कुशा॥ ७२॥

इति श्रीविक्रमाङ्कदेवचरिते महाकाव्ये त्रिभुवनमल्लदेवविद्यापतिकाश्मीरकभट्टबिल्हणविरचिते चतुर्दशः सर्गः॥ १४॥

---

भुजविक्रमदन्तिडिण्डिमः समरोत्साहशिखण्डिवारिदः।
अथ कुन्तलभर्तुरध्वनद्विजयोद्योगविलासदुन्दुभिः॥ १॥
विजयोत्सुकवीरसुन्दरीकृतनिष्कम्पचतुष्कमण्डलाः।
नरनाथपथावलोकनप्रगुणत्वं सुभटाः सिषेविरे॥ २॥
रणदुन्दुभिमेघनिस्वनैः सुभटश्रेणिविदूरभूमयः।
अभवन्निसृतासिवल्लरीनवरत्नाङ्कुरकोटिदन्तुराः॥ ३॥
रणसंभ्रमलोलभङ्गिषु न्यपतन्नद्भुतरागनिर्भराः।
कबरीषु कुरङ्गचक्षुषामसिलेखासु च वीरदृष्टयः॥ ४॥
अधिरोपितसारिपञ्जरस्थितिदर्पोद्धुरयोधमण्डलाः।
अभजन्त गजाः स्थितिं बहिर्मणिसंनाहनिवेशपेशलाः॥ ५॥
सुभटः प्रमदाकरार्पितं दलयन्नागरखण्डवीटिकाम्।
रिपुदन्तिघटासु खण्डनं तृणमुत्साहवशादमन्यत॥ ६॥

---

XIV. 71. भ्रोतस्विनी ° Ms.

रिपुराजशिरःसु शेखरस्थितरत्नाङ्कुरकण्टकालिषु ।
भ्रमणक्षमतां दधुः खुरास्तुरगाणां कृतलोहबन्धनाः ॥ ७ ॥
रणलम्पटमत्तकुञ्जरं स्फुरदश्वीयसहस्रसंकुलम् ।
तदनेकभटोद्भटं बलं क्षुभितस्याप लिपिं पयोनिधेः ॥ ८ ॥
करिणः करशीकरोत्करैः प्रहितैः क्ष्मापतिमन्दिरोदरे ।
सिषिचुः क्षितिपस्य हृद्गतां विजयाशां कुसुमावलीमिव ॥ ९ ॥
दृशमम्बुरुहामिव स्रजं विजयश्रीपरिरम्भशंसिने ।
स्फुरणप्रवणाय बाहवे बहुमानेन समर्पयन्नृपः ॥ १० ॥
पुलकाङ्कुरकण्टकोत्करानतिरागादविजानतीमिव ।
वपुषा सुभटश्रियं दधन्निविडालिङ्गनगाढकौतुकम् ॥ ११ ॥
हसितेन विनिःसरन्मुखास्थितकर्पूरपरागपाण्डुना ।
घटयन्प्रतिराजपङ्कजग्लपनार्थं तुहिनच्छटामिव ॥ १२ ॥
वलयोदररत्नदर्पणप्रतिबिम्बच्छलतो निजाकृतेः ।
हरिणेव विपक्षसंक्षयव्रतभाजानुजयोरधिष्ठितः ॥ १३ ॥
घनचन्दनलेपपाण्डुना वपुषा पोषितलोचनोत्सवः ।
परितः स्फटिकक्ष्माभृता दधता कङ्कटतामिवाश्रितः ॥ १४ ॥
धृतमङ्गलमौक्तिकाक्षतः क्षणदानाथ इवामलद्युतिः ।
मदवारणमन्थरैः पदैरथ निष्क्रम्य चतुष्कवेश्मनः ॥ १५ ॥
त्वरयाधिरुरोह दन्तिनः कृतपूजस्य स पृष्ठमादरात् ।
सह मङ्गलतूर्यनिःस्वनैरुदयाद्रेरिव शृङ्गमर्यमा ॥ १६ ॥
क्षितिपेन करी विभूषितस्तरुणीनेत्रसहस्रसाङ्गिना ।

XV. 10. °शंसने Ms.—XV. 12. °पाण्डना Ms.—XV. 15. °काकृतः क्ष° Ms.; निःक्रम्य Ms.—XV. 16. °रदयाद्रेर्विशृ° Ms. After 16 Ms. adds अंतःक्रियाकुलकम्.

हसतिस्म सुरेन्द्रदन्तिनः श्रियमारूढपुरंदरस्य सः ॥ १७ ॥
महति क्षितिभर्तुराहवे निकटस्थे कुविकल्पदोलिताम्।
अकरोज्जयकुञ्जरः स्थितिं स करास्फालनतः स्थिरामिव ॥ १८ ॥
नलिनीदलचारुकान्तिभिः पदचिह्नैर्मदवारिपूरितैः।
सरसीमिव तापशान्तये रचयामास स पार्थिवश्रियः ॥ १९ ।
मदपानबहुप्रलापिनां भ्रमराणां करविभ्रमैरभूत्।
रिपुवारणडिण्डिमध्वनिश्रवणायेव निवारणोन्मुखः ॥ २० ॥
अथ वीररसावतारतस्तरसा पल्लवितेन चेतसा।
जगदद्भुतभूरिसाहसः प्रहसन्नुच्चलतिस्म पार्थिवः ॥ २१ ॥
समराङ्गणसंगतिं भजन्विजयश्रीपरिरम्भणोत्सुकः।
स बभार विलाससद्मनि प्रणयिन्याः प्रविशन्निवोत्सवम् ॥ २२ ॥
कियतीमपि तीव्रविक्रमः समतिक्रम्य वसुंधरां ततः।
अवलोकयतिस्म भूपतिः प्रसरत्तूर्यरवं द्विषद्बलम् ॥ २३ ॥
मदवारिसमुत्थशैवलद्युतिरोलम्बकलापजन्मनाम्।
अददुर्दशनांशुचन्द्रिकां तिमिराणामिव वारणाय ये ॥ २४ ॥
निजदानजलोत्थकर्दमस्खलनत्रस्ततयेव ये पथि।
पदविन्यसनं दधुः क्रमान्मदनिद्रार्धनिमीलितेक्षणाः ॥ २५ ॥
सरसीसलिलावगाहनग्रहिलाः स्वैरविहारकेलिषु।
दलितादरविन्दमण्डलादधिरूढामिव ये दधुः श्रियम् ॥ २६ ॥
दधुरद्रिविघट्टनेषु ये पतितैर्मूर्धनि निर्झरैरिव।
कलयन्तमतिप्रभूततां क्षतधाराजलदुर्दिनं मदम् ॥ २७ ॥
श्रुतिभूषणशङ्खशुक्तिभिः शशिमुग्धाभिरधारयन्त ये।

XV. 22. °णोत्सुख: Ms.—XV. 24. तिमिराणामिवार° Ms.—XV. 27. °कृतधारा°; निर्जरैरिव Ms.

मदनिर्झरिणीतटस्थलीं कलहंसीभिरुपासितामिव ॥ २८ ॥
ननु कस्य निवेश्यतामिदं शिरसि प्राज्यभुजस्य भूभुजः।
पदमेकमधारयन्निति ध्रुवमुच्चैस्त्रिपदीनिभेन ये ॥ २९ ॥
कृतसंनहनास्तथाविधाः करिणो यत्र सहस्रशः स्थिताः।
मदलुब्धमधुव्रतस्वनैरगमन्यामिकतामिव श्रियः ॥ ३० ॥
जलराशिनिवेशसंकटा जवरोधाय बभूव भूरियम्।
कविकां दशनैरखण्डयन्निति कोपादिव ये मुहुर्मुहुः ॥ ३१ ॥
अवलम्बविडम्बनामिमां तरणेर्हन्त हया हसन्ति नः।
वसुधामिति मत्सरादिव क्षपयन्तिस्म परिक्रमेषु ये ॥ ३२ ॥
अवलोक्य रवेस्तुरंगमान्नववैदूर्यनिभे नभस्तले।
हरितासु तृणस्थलीषु ये विहरन्तिस्म वियद्भ्रमादिव ॥ ३३ ॥
वदनस्थितफेनमण्डलच्छलतो दुग्धपयोधिनेव ये।
निजसूनुतुरंगशङ्कया परितोषादुपसृत्य चुम्बिताः ॥ ३४ ॥
खुरघट्टितवैरिकुट्टिमस्फुटितैर्वाङ्किकणैः कदर्थिताः।
न निघर्षमकार्षुरङ्घ्रिभिश्चटुलैर्ये क्वचिदेव वर्त्मनि ॥ ३५ ॥
निकटस्थितमेघडम्बरैः सुरचापैरिव तैस्तुरंगमैः।
यदुदश्वयतिस्म साध्वसं जगतां वज्रनिपातनिष्ठुरैः ॥ ३६ ॥
हृदयस्थितरत्नभूषणप्रतिबिम्बच्छलतः शिरांसि यैः।
विधृतानि निजानि लीलया मरणे निर्गहनैरिवोरसि ॥ ३७ ॥
सहजोष्मविशोषजर्जरं हृदि येषां विरराज चन्दनम्।
समनीकशतप्रहारजं च्युतमस्थ्नामिव पाण्डुरं रजः ॥ ३८ ॥

---

XV. 28. मदनिर्जरिणी° Ms.—XV. 30. °स्तथाविधा Ms. After 30 कुलकम्.—XV. 36. After 36 the Ms. inserts कुलकम्.—XV. 37. निग. हनैः Ms.

प्रबलेन भुजद्वयेन ये बहुशस्तीर्णमहाहवार्णवाः ।
यशसः प्रणयित्वमागताः पृथुडिण्डीरकलापपाण्डुनः ॥ ३९ ॥
समदप्रतिपक्षमर्दनाद्बहुशस्त्रव्रणगर्तशालिनि ।
निखिलेपि यदङ्गविस्तरे विदधे वीररसः समाश्रयम् ॥ ४० ॥
तिमिरैरिव पिण्डतां गतैर्दवदम्भैरिव घर्मवासरैः ।
बहुभिः सुभटैस्तथाविधैर्यदसंभाव्यपराभवागमम् ॥ ४१ ॥
परिभाव्य नितान्तभैरवं तदतिक्रान्तदिगन्तरं बलम् ।
कतरो न जगाम संभ्रमं मुमुदे कुन्तलपार्थिवः परम् ॥ ४२ ॥
विजयामृतकर्षणोद्यतैः सुभटैर्वीररसाम्बुधेस्ततः ।
प्रलयप्रतिमं द्वयोर्दिशोः समुपाक्रम्यत युद्धमुद्धतम् ॥ ४३ ॥
अधिरुह्य बलद्वये बलाद्भुतदण्डैः परिदोलनोद्यते ।
समरद्रुमतः फलावलिर्निपपातेव शिरःकदम्बकैः ॥ ४४ ॥
सुभटस्य निहत्य वल्गतः सममेव प्रतिपक्षवीरतः
अविशद्दृशि शोणितच्छटा हृदये खड्गलता च संमुखी ॥ ४५ ॥
असिना विनिपत्य लोलतां गमिते मूर्धनि भङ्गशङ्कितः ।
मुदमाप जयामृताशया सुभटस्तत्र पृषत्ककीलिते ॥ ४६ ॥
क्षतचञ्चुपुटा विघट्टनान्मुकुटे रत्नमये शकुन्तयः ।
न सहर्षमकार्षुरर्थितां परमार्थामिषपिण्डकेष्वपि ॥ ४७ ॥
अवलम्ब्य शनैरगाधतां रुधिरस्रोतसि मार्गरोधिनि ।
न परस्परदर्शनेप्यभूत्सुभटानां क्षणमाहवोत्सवः ॥ ४८ ॥
गुणवादपरायणा गिरः स्मितसंदिग्धविरोधमीक्षितम् ।
परुषत्वमुवास केवलं करवालेषु भुजोष्मशालिनाम् ॥ ४९ ॥
पतितेषु शिरःसु मानिनामिदमासीद्वमाननास्पदम् ।

---

XV. 41.ᶜ दैवदम्भैरिव Ms.—XV. 44. फलावलीर्नि° Ms.—XV. 46. ᵇ लोलतां Ms.

यदमीषु सरोषमाविशन्नुपरि न्यस्तपदाः पदातयः ॥ ५० ॥
शिरसा सुभटस्य दर्शितं शरलूनेन महत्कुतूहलम् ।
च्युतमप्यवनौ हि विद्विषि प्रहितं लोचनमाचकर्ष यत् ॥ ५१ ॥
असिघट्टनतः परस्परं पतिता वह्निकणा रणाङ्गणे ।
अलभन्त पिशाचयोषितां प्रियतामामिषपाककर्मणि ॥ ५२ ॥
गलितद्विपकुम्भमौक्तिकच्छलतो व्योमनिभासिमण्डली ।
विनिमीलिततारकावदज्जयतिग्मांशुमिवोदयोन्मुखम् ॥ ५३ ॥
हृदयस्थितबाणमूर्छया करिकुम्भस्थलपीठशायिनाम् ।
अभवन्नुपकारहेतवश्चलकर्णव्यजनानिलोर्मयः ॥ ५४ ॥
विरराज नमन्महाकरी भटवक्षःस्थलभेदलम्पटः ।
अवनम्य रणाङ्गणस्थितां जयलक्ष्मीमधिरोपयन्निव ॥ ५५ ॥
अभवद्बलमेतदन्तरे सकलं कुन्तलचक्रवर्तिनः ।
प्रतिपक्षगजप्रधावनक्षुभितं दिक्षु विलक्षमास्तृतम् ॥ ५६ ॥
न स कोपि महोद्धुरः करी न तुरंगो न पटुर्महाभटः ।
विचचार न यः पराङ्मुखः प्रतिपक्षप्रलयानिलाहतः ॥ ५७ ॥
पुलकप्रणयं कपोलयोरथ चालुक्यनृपः प्रकाशयन् ।
उदतिष्ठदपारपौरुषः स्वयमुद्दाममदेन दन्तिना ॥ ५८ ॥
दलयन्रिपुकीर्तिकन्दलीं रणलीलासरसीमृणालिकाम् ।
करिमेघघटाश्च पाटयन्नतनोदद्भुतराजहंसताम् ॥ ५९ ॥
क्षतकुञ्जरकुम्भमौक्तिकैर्निपतद्भिर्मुकुलानुकारिभिः ।
रिपुवीरयशःक्षमारुहं स भुजाभ्यां निजगाद कम्पितम् ॥ ६० ॥
रिपुवारणकुम्भमण्डलीं प्रहरन्निर्गहनः क्षमापतिः ।

---

XV. 51. हि om. Ms.—XV. 52. प्रियतामिष° Ms.—XV. 56. सकलकु° Ms.—XV. 59. °ळीलस° Ms.

प्रमदाघनपीवरस्तनस्मरणस्मेरमुखो बभूव सः ॥ ६१ ॥
निपतन्तमसौ निवारयन्नरिनाराचमिभस्य मूर्धनि ।
चरणेन निहत्य पृष्ठतः सुरपुष्पप्रकरैरपूर्यत ॥ ६२ ॥
करटिध्वजदण्डसङ्गिनीं प्रतिवीरप्रहितां शरावलिम् ।
जयकीलकमालिकामिव क्षितिपालः सविलासमैक्षत ॥ ६३ ॥
असिना विशिखैः सतोमरैः सहसा कुञ्जरधावनेन च ।
स सहस्रमिवोद्वहन्करान्प्रतिपक्षक्षयदीक्षितोभवत् ॥ ६४ ॥
तमवेक्ष्य तुरंगवाहिनीहठनिर्लोठनबद्धकौतुकम् ।
तुरगावलिरंशुमालिनः कलयामास गुणाय दूरताम् ॥ ६५ ॥
असिधेनुविलूनकंधरैः समदाधोरणमस्तकैरसौ ।
पृथिवीन्दुरपूरयन्महीं युगपद्द्यां च यशोभिरुद्भटैः ॥ ६६ ॥
अपि शैलविटङ्कभेदिभिर्विशिखैस्तस्य निवेशितव्यथाः ।
द्विषतां करिणः पलायिताः शरणं दिग्द्विरदानिवागमन् ॥ ६७ ॥
प्रतिवीरविमुक्तमार्गणप्रचयाघट्टितकङ्कटोत्थितैः ।
शिखिभिः स बहूनकल्पयत्समराम्भोनिधिवाडवानिव ॥ ६८ ॥
रणसीमनि तेन वैरिणो विजयश्रीविरहाद्विषादिनः ।
गजमौक्तिकरेणुपाण्डुराः समनीयन्त तपस्विताामिव ॥ ६९ ॥
करिपादविपाटितोद्भटप्रतिभूपालकपालकर्परः ।
भुवनत्रयभाण्डपूरणक्षमकीर्तिः समरे चचार सः ॥ ७० ॥
न स कोपि कठोरपाटवः प्रतिभूभृत्कटके भटोभवत् ।
शरवर्षकृताभिभाषणः क्षणमस्याभिमुखो बभूव यः ॥ ७१ ॥
क्षणमात्रविसूत्रिताखिलप्रतिपक्षस्य चुलुक्यभूपतेः ।

---

XV. 64. °द्वहत्क° Ms.—XV. 68. प्रतिवीरमुक्त°; मर्गण°, Ms.—XV. 71. °भाषणक्ष° Ms.

वपुषि त्रिदिवौकसां परं सह पुष्पैरपतन्छिलीमुखाः ॥ ७२ ॥
यदनेकपताकिनीभटक्षयमेकः समनीकमूर्धनि ।
स चकार चुलुक्यपार्थिवस्तदभूत्कस्य न वर्णनास्पदम् ॥ ७३ ॥
चकितेव कबन्धताण्डवैः समरप्राङ्गणरङ्गभूमिषु ।
परिदृष्टपराक्रमं भुजं विजयश्रीः क्षितिभर्तुराश्रिता ॥ ७४ ॥
कवचे परितः कृतस्थितीन्भुजयोर्व्याप्तिविबन्धकारिणः ।
कमलप्रतिमेन पाणिना विशिखान्सस्मितमुच्चखान सः ॥ ७५ ॥
स बभार शिरस्त्रमण्डलस्थितनाराचसहस्रभारतः ।
प्रणमन्निव संगरश्रियं क्षणमूर्ध्वानतकंधरं शिरः ॥ ७६ ॥
रिपुशोणितबिन्दुमुद्रितौ स बिभर्तिस्म भुजौ महाभुजः ।
क्षपितप्रतिपक्षशेखरच्युतरक्ताङ्कुरदन्तुराविव ॥ ७७ ॥
रणसीमनि तत्रतत्र ये विशिखैः क्ष्मातिलकस्य कीलिताः ।
अपतन्नपि धावतां न ते करिणां कुम्भतटीविटङ्कतः ॥ ७८ ॥
अयि नाथ विमुक्तकैतवं किमु मूर्छामिषमीलिते दृशौ ।
न तवायमुपेक्षितुं क्षणः सुभटस्वामिचमूपराभवम् ॥ ७९ ॥
पुरुषाः सुरधाम्नि दुर्लभास्तदिहायान्ति निलिम्पपांसुलाः ।
अलमेतदुपाधिनामुना मयि कामिन्नवधीरणेन ते ॥ ८० ॥
विदितं यदयं विगाहसे सुभट श्वाससमीरगोपनम् ।
सुरवारपुरंध्रिचुम्बनादिह ते नूतनमस्ति सौरभम् ॥ ८१ ॥
मम भाग्यविपर्ययादिदं त्वमपर्यन्तमधैर्यमाश्रितः ।
अहहाभिसरन्ति संपदश्चपलाः स्वामिगृहादनङ्कुशाः ॥ ८२ ॥
चलितोसि सुराङ्गनागृहं मम सौभाग्यविपर्ययाद्यदि ।

XV. 73. °पताकिनि° Ms.—XV. 75. विशिखान्स° Ms.—XV. 76. क्षणमूर्धानत° Ms.—XV. 77. भुजो Ms.

किमु विस्मरसि स्मरातुर प्रभुसंमानमिहान्यदुर्लभम् ॥ ८३ ॥
इति वीरविलासिनीजनस्फुरदाक्रन्दसहस्रदुर्दिनाम् ।
रणभूमिमसौ विलोकयन्नरिपृष्ठग्रहणान्न्यवर्तत ॥ ८४ ॥
तदनु नृपतिः प्राप्तः पारं परं समराम्बुधेः
सरलितधनुः श्रुत्वा शत्रोः पलायनमाकुलम् ।
अहह कृपणस्त्यक्तः कीर्त्याप्यसाविति विव्यथे
प्रकृतिमहतां दुर्वृत्तेष्वप्यहो चटुलाः क्रुधः ॥ ८५ ॥
करितुरगसमृद्धां सार्धमन्तःपुरेण
क्षितिपतिरथ सर्वां शत्रुलक्ष्मीं गृहीत्वा ।
ललितगतिकरेणुन्यस्तहेमासनस्थः
प्रवरजयपताकां राजधानीं विवेश ॥ ८६ ॥
संप्राप्तं कुलकण्टकं तमटवीमध्यादबन्ध्यैर्भटैः
कारुण्याद्रुतबाष्पगद्गदवचाः संभाष्य संतोष्य च ।
चालुक्यान्वयशेखरोथ शिखरप्रेङ्खोलमुक्ताफल-
प्रालम्बद्युतिपुञ्जदर्शितयशोगुच्छामगच्छत्पुरीम् ॥ ८७ ॥

॥ इति श्रीविक्रमाङ्कदेवचरिते महाकाव्ये त्रिभुवनमल्लदेव-
विद्यापतिकाश्मीरकभट्टश्रीबिल्हणविरचिते पञ्चदशःसर्गः ॥

---

XV. 84. स्फुरदाक्रंद° Ms.—XV. 87. °वचाः om. Ms.; °दाशित° Ms.

कुङ्कुमस्मितसंकोची क्रौञ्चीमदनदेशकः।
मित्रमुत्तरवायूनां वियल्लावण्यतस्करः॥ १॥
शरत्कालातपक्लान्तकान्तवक्त्रेन्दुवल्लभः।
अथाजगाम हेमन्तः सामन्तः स्मरभूपतेः॥ २॥
शरद्वितीर्णसौभाग्यभङ्गदक्षः क्षमापतेः।
कान्तामुखानां हेमन्तः सेवकत्वमशिक्षत॥ ३॥
अजायन्त विभावर्यस्तपने मन्दतेजसि।
दिवसग्रस्तविस्तारकर्षणाय कृतक्षणाः॥ ४॥
दोलयन्तः कपोलेषु कस्तूरीपत्त्रबन्धुषु।
अलकानलकास्त्रीणां ववुः कैलासवायवः॥ ५॥
रतिकोपे प्रसादे च दधानाः परिपूर्णताम्।
आयामवत्यो यामिन्यः कामिनीनां मुदेभवन्॥ ६॥
प्रौढत्वमाचरन्तीभिर्नीत्वा संकोचपात्रताम्।
आक्रियन्त त्रियामाभिः स्त्रीजिता इव वासराः॥ ७॥
अलभन्त नभःक्षेत्रे तारास्तरलकान्तयः।
त्विषं तुषारबीजानां नूतनाङ्कुरशालिनाम्॥ ८॥
सशङ्केनेव कन्दर्पदर्पोष्मपरिचिन्तनात्।
शीतेन मदिराक्षीणां नास्पृश्यत कुचस्थली॥ ९॥
अभूवन्नद्भुतोष्माणः शीतव्याप्ते जगत्त्रये।
कुचोत्सङ्गाः कृशाङ्गीणां स्थानं मन्मथतेजसः॥ १०॥
यामिनीभिरनीयन्त सततं कामिनीजनाः।
अनङ्गसंगतेरङ्गैर्गाढालिङ्गनकौतुकम्॥ ११॥

---

XVI. 2. The Ms. inserts after this verse, युग्मं.—XVI. 3. कांतमुखानां Ms.

अक्षिप्यन्त तुषाराद्रिवायुस्फुटनशङ्कया ।
कान्ताभिः कुङ्कुमालेपनिचुलेषु मुखेन्दवः ॥ १२ ॥
पुण्ड्रेक्षुपाकपूतानि क्षेत्राणि दधि मांसलम् ।
आसीत्कुङ्कुमचर्चा च हन्त हेमन्तजीवितम् ॥ १३ ॥
मद्वैरिणः कठोरांशोरियं प्रणयभूरिति ।
रोषादिव तुषारेण निरदह्यत पद्मिनी ॥ १४ ॥
समक्षमपि सूर्यस्य पर्यभूयत पद्मिनी ।
तेजस्विनोपि कुर्वन्ति किं कालवशमागताः ॥ १५ ॥
अङ्गेषु स्पर्शसौभाग्यमपि सामान्ययोषिताम् ।
परिपोषितकन्दर्पस्तताान तुहिनागमः ॥ १६ ॥
विहारयोग्येषु दिनेषु तेषु देवश्चुलुक्यान्वयचक्रवर्ती ।
मृगेन्द्रगामी मृगयां विधातुं स निर्जगाम स्वभुजार्जितश्रीः ॥ १७ ॥
स वारबाणेन रणैकवीरः श्रियं दधे नीरदमेचकेन ।
आमुक्तनीलोत्पलकङ्कटस्य देवस्य चूताङ्कुरकार्मुकस्य ॥ १८ ॥
स कञ्चुकस्योपरि नीलभासः स्थितेन हारेण रराज राजा ।
समेघनक्षत्रगणावतीर्णो विद्याधरः कश्चिदिवाम्बराग्रात् ॥ १९ ॥
सहागतान्तःपुरसुन्दरीभिरुदारहारप्रतिम्बिताभिः ।
वक्षःस्थले तस्य कलत्रमाद्यं रराज लक्ष्मीः सपरिच्छदेव ॥ २० ॥
बभार हारावलिमौक्तिकानि वक्षःस्थलेन स्फटिकोज्ज्वलेन ।
उच्चैः स्थितस्य प्रतिबिम्बितानि स कुड्मलानीव यशोद्रुमस्य ॥ २१ ॥
नेत्राभिरामं दधता प्रपञ्चं नीलातपत्रेण स राजतेस्म ।
खण्डेन लक्ष्मीकुलमन्दिराणां नीलोत्पलानामिव राजहंसः ॥ २२ ॥
द्वयोर्दिशोः फेनविपाण्डुराभ्यां स चामराभ्यां पृथिवीतलेन्द्रः ।

---

XVI. 17. विधायतुं Ms.—XVI. 18. भूना° Ms.

प्रसाधिताशेषदिगन्तरस्य रेजे यशोभ्यामिव दोर्युगस्य ॥ २३ ॥
व्योमाङ्गणस्थेन रराज वाजी झम्पासु तस्याग्रखुरद्वयेन ।
समुद्यतो मूर्धनि ताडनाय रोषादिवोष्णांशुतुरंगमाणाम् ॥ २४ ॥
तेजोनिधेस्तस्य तुरंगमोसौ देहेन डिण्डीरविपाण्डुरेण ।
घर्मेण दग्धानिव नीलदेहान्सहस्ररश्मेस्तुरगाञ्जहास ॥ २५ ॥
तेजोविशेषात्परितोषितानां प्राप्येव वेगं मनसां सकाशात् ।
वाजी स राजीवमुखस्य तस्य विवेद वायोरपि पङ्गुभावम् ॥ २६ ॥
पर्याणमाणिक्यरुचां चयेन हरिप्रभस्यास्य हरिश्चकाशे ।
आपूरिताङ्गः खुरखण्डितारिभूपालरत्नाङ्गणपांसुनेव ॥ २७ ॥
जनस्य चित्रोल्लिखिताश्ववाररूढासने तत्र निपत्य दृष्टिः ।
भ्रान्ता तुरंगभ्रमिपृष्ठलग्ना श्रमादिवान्यत्र न गन्तुमैच्छत् ॥ २८ ॥
संचारिणी मन्मथराजधानी लीलावनं विभ्रमपल्लवानाम् ।
अन्तःपुरं तस्य जगाम पृष्ठे परा प्रतिष्ठा रसनायकस्य ॥ २९ ॥
वाराङ्गनास्तस्य तुरंगमेषु भ्रूकार्मुकारूढकटाक्षबाणाः ।
विरेजिरे दिग्विजयोद्यतस्य सेना इवानङ्गनराधिपस्य ॥ ३० ॥
पापर्द्धिलीलासरसीमरालाः कृतान्तदूता मृगपोतकानाम् ।
हिंसाकटाक्षा इव चित्रवर्णाः श्वानः प्रसस्रुः पुरतस्तदीयाः ॥ ३१ ॥
त्रैलोक्यलङ्घनकुतूहलिना हयेन
देवः कियन्तमपि मार्गमसौ विलङ्घ्य ।
कर्णान्तसंघटितनेत्रपुटो ददर्श
व्यालोलमत्तहरिणानि वनान्तराणि ॥ ३२ ॥
सार्धं प्रियेण कियतापि परिग्रहेण
स प्राविशद्विशदकीर्तिकृतावतंसः ।

XVI. 27. पांशुनेव Ms.—XVI. 32. °मत्रहरिणानि.

नीरन्ध्रनीलनिचुलप्रचुरच्छदालि-
प्रच्छादितार्ककिरणासु गिरिस्थलीषु ॥ ३३ ॥

देवस्य विक्रमनिधेरथ सूकराणां
शैलानुकारिकरिणामिव चक्रवालम् ।
स्निह्यद्वराहगृहिणीपरिचुम्ब्यमान-
मुस्तासुगन्धिमुखवालकमाविरासीत् ॥ ३४ ॥

गत्वा पदानि कतिचित्पुरतः सगर्वं
पृष्ठस्थितान्प्रति मुहुः प्रतिपालयन्तम् ।
बाणेन तत्र करिपीवरदेहमेकं
कक्षान्तरे क्षितिपतिः क्षपयांचकार ॥ ३५ ॥

केचिन्निपेतुरवनौ सह मार्गणेन
मार्गं कियन्तमपि केपि गताः सशल्याः ।
चेरुः कठोरशरधोरणिपातभीत्या
शैलस्थलीषु विषमासु परे वराहाः ॥ ३६ ॥

विपर्ययं पूर्वकथाद्भुतस्य चालुक्यभूपालशरश्चकार ।
पपात यन्नष्टधृतिर्वराहस्तं विह्वलाङ्गं वसुधा बभार ॥ ३७ ॥

क्रोडः सक्रीडमेतेन तरौ नाराचकीलितः ।
लीलामालानबद्धस्य दधे मुग्धस्य दन्तिनः ॥ ३८ ॥

श्वा निर्गतः कनकशृङ्खलया सहैव
कोपान्निरीक्ष्य विशतो गहने वराहान् ।
रुद्धस्तया विटपिकण्टककीलकेषु
साक्रन्दकण्ठकुहरो मुहुरुत्पफाल ॥ ३९ ॥

रुद्धं विलोक्य हरिणं हरिणी गतापि
व्यावृत्य बाणविषये नृपतेश्चचार ।

प्रायेण देहविरहादपि दुःसहोयं
सर्वाङ्गसंज्वरकरः प्रियविप्रयोगः ॥ ४० ॥

उड्डीय केपि निविडीकृतचापदण्डे
चालुक्यभूभुजि गता गगनं कुरंगाः।
सप्तर्षिमण्डलसमीपमिव प्रविश्य
निर्बाधमाश्रममृगत्वमवाप्तुकामाः ॥ ४१ ॥

स्वयमस्य पयोदवारिधाराभ्रममासाद्य पृषत्कधोरणीषु।
शरगोचरमागतो मयूरश्छलितो दिव्यपयोदुराग्रहेण ॥ ४२ ॥

स चकार शिखण्डिमण्डलानां नृपतिस्तत्र तथा यथा बभूव।
पथिकप्रमदासु कोमलाङ्गः कलकेकाविकलः पयोदकालः ॥ ४३ ॥

स्वेच्छाविहाररसिकस्य वनस्थलीषु
काकुत्स्थतः किमपि तस्य लघुत्वमासीत्।
यस्माद्दशाननजयी रघुराजपुत्रः
पञ्चाननं तु निजघान चुलुक्यवीरः ॥ ४४ ॥

अपि शरधिविकृष्टैश्चिच्छिदे कङ्कपत्त्रै-
र्निकटमपि न रोहिद्गर्भिणीचक्रवालम्।
स्मरणसरणिमागाद्गर्भभारालसानां
विलसितमबलानां यद्बलाद्भूमिभर्तुः ॥ ४५ ॥

किंवा बहुप्रलपितैरवराहयूथ-
मुत्सन्नकेसरि कदर्थितरङ्कुसार्थम्।
कुर्वन्नरण्यमुपसृत्य निषेव्यतेस्म
तत्रैव कुन्तलपतिः शिशिरश्रियापि ॥ ४६ ॥

---

XVI. 41. निवडीकृ° Ms.—XVI. 44. काकुस्थतः Ms.—XVI. 46. कुंत-लपतेः Ms.

यन्मुग्ध्रुवां घुसृणलेपकवोष्णमङ्गं
यद्यौवनोष्ममधुराणि कुचस्थलानि।
कामस्य तत्सकलकार्मुकयामिकस्य
श्यामासु जीवितमजायत शैशिरीषु ॥ ४७ ॥
शुभ्रेषु राङ्कवपटेषु हसन्तिकासु
लीलाहसन्मलयजेन्धनपावकासु।
कृष्णागुरुज्वलनधूमशिखासु चासी-
त्त्रैलोक्यकार्मुकजयी मदनप्रतापः ॥ ४८ ॥
अङ्गारहासिषु विलासगृहोदरेषु
विस्तीर्णतूलपटकल्पितवेष्टनेषु।
उष्णेषु च प्रणयिनीकुचमण्डलेषु
शान्तिं जगाम शिशिरस्य तुषारगर्वः ॥ ४९ ॥
गात्रेषु सौष्ठवकृता मृगयाश्रमेण
श्यामाभिरुल्लिखितमन्मथविस्तराभिः।
आलिङ्गनैश्च सुदृशामनुरञ्जितोऽसौ
सर्वर्तुगोत्रतिलकं शिशिरं विवेद ॥ ५० ॥
गौरीविभ्रमधूपधूमपटलश्यामायमानोदराः
कण्ठक्षोदभयान्न ये कवलिताः श्रीकण्ठहारोरगैः।
स्फारोन्मीलितशारदागृहबृहद्द्वारान्मुदा निर्गता-
स्ते श्लाघामलभन्त कुन्तलपतेः कैलासरौद्रानिलाः ॥ ५१ ॥
स्पृष्टाः स्तोकं वितस्तातटतुहिनकणैः पीडयन्तः पयोर्णा

XVI. 48. °पिवकासु Ms.—XVI. 49. विस्तीर्ण om. Ms.—XVI. 51. °मोदराः Ms.; Ms. °बृहद्द्वारवास्ते omits 5 syllables of 3rd Pâda; रौळानिळाः Ms.

चञ्चन्तश्चन्द्रभागालहरिषु यमुनावीचिमैत्रीपवित्राः ।
धुन्वानाः सिद्धसिन्धोरुभयतटगतां देवदारुद्रुमालीं
तस्य प्रीत्यै बभूवुस्तुहिनगिरितटीकेलिकाराः समीराः ॥ ५२ ॥
इति नरपतिः सार्धं दारैरुदारविचेष्टितः
शिशिरसमयश्लाघ्यक्रीडासुखान्यनुभूय सः ।
नगरमगमल्लीलागारप्रमोदमुपासितुं
क्षणमपि कुतस्तादृक्षाणां विलासदरिद्रता ॥ ५३ ॥

॥इति श्रीविक्रमाङ्कदेवचरिते महाकाव्ये त्रिभुवनमल्लदेव-विद्यापतिकाश्मीरकभट्टश्रीबिल्हणविरचिते षोडशः सर्गः ॥

---

विधाय भूमेस्तलमस्तकण्टकं ववर्ष हेम्ना स सहर्षमर्थिनाम् ।
अकुर्वतां सर्वजनार्तिखण्डनं वृथा तडित्पल्लवचञ्चलाः श्रियः ॥ १ ॥
चुलुक्यवंशे महतां महीभुजां महाभुजः शेखरतामसौ गतः ।
न मानुषीमेव निराचकार यः प्रजासु दैवीमपि चिच्छिदे रुजम् ॥२॥
पयोभिरस्मान्परिपूरयन्ति ये पयोधयस्ते दधतेस्य वश्यताम् ।
इतीव तत्सेवनवाञ्छया जलं यथोपयोगं मुमुचुः पयोमुचः ॥ ३ ॥
अकालमृत्युर्न चचार कुत्रचित्कचिन्न दुर्भिक्षमलक्ष्यत क्षितौ ।
किमन्यदन्यायनिबर्हणो नृपः स राज्यमिक्ष्वाकुपतेरदर्शयत् ॥ ४ ॥
न भानुरत्यर्थमतापयज्जनं ववुः समीराः श्रममात्रहारिणः ।
फलानि भङ्क्त्वातिभरेण पादपान्भियेव पक्कान्यभजन्त पाण्डुताम् ॥५॥
जनैरवज्ञातकपाटमुद्रणैः क्षपासु रक्षाविमुखैरसुप्यत ।
करा विशन्तिस्म गवाक्षवर्त्मसु क्षपापतेश्छिद्रपथैर्न तस्कराः ॥ ६ ॥

XVI. 53. नरपतिसार्धं Ms.—Colophon खोडशमः सर्गः.—XVII. 4. °दन्यायनिर्वहणः Ms.

दिशः कृताः संततनूर्यनिस्वनैरलक्ष्यदिक्कुञ्जरकण्ठगर्जिताः।
पुरेपुरे संततमुत्सवाद्भूद्ध्वजांशुकप्रावृतभास्करं नभः॥ ७॥
उदारशौर्यैकरसः क्षमापतिः स निर्विनोदः समरोत्सवं विना।
समापिताशेषमदान्धभूपयोरसेवकत्वं भुजयोरमन्यत॥ ८॥
क्रमादजायन्त निजाकृतेः समाः कुलप्रतिष्ठानिधयोऽस्य सूनवः।
अनन्यसाधारणपुण्यशालिनां फलन्त्ययत्नेन मनोरथद्रुमाः॥ ९॥
सुवर्णवातायनतुङ्गभूमिषु स्थिताः प्रमोदं ददुरस्य नन्दनाः।
कृतास्पदाः स्वीयविमानशङ्कया प्रविश्य विद्याधरबालका इव॥१०॥
अहं सदा प्राणसमं महीभुजामयं तु मां वेत्ति नृपस्तृणोपमम्।
इतीव कर्णेषु सुवर्णमर्थिनां स्वखेदमाख्यातुमभूत्कृतास्पदम्॥ ११॥
नरेन्द्रचामीकरचारुभूषणप्रभावलीसंगमपिङ्गलत्विषाम्।
इतस्ततः छोषभियेव दुर्गतिर्मुमोच सङ्गं ज्वलतामिवार्थिनाम्॥१२॥
शिरःस्थदेवालयपातभीतितः प्रगल्भते खण्डयितुं न मामयम्।
इति ध्रुवं काञ्चनभूधरोऽभवन्महीभुजि त्यागिनि तत्र निर्भयः॥ १३॥
इहागतः खण्डनमेव लप्स्यते पलायनार्थं कनकाद्रिरुच्यताम्।
इतीव देशान्तरगामिनामभून्नरेन्द्रहेम श्रुतिलग्नमर्थिनाम्॥ १४॥
कृतो निवासः कमलाविलासिनः क्षमाभुजा तेन नितान्तमुन्नतः।
विभाति धर्मस्य समुद्गतो भुजः कलिच्छिदे क्षमाबलयोदरादिव॥१५॥
नभोङ्गणव्यापिनमुष्णदीधितेर्गुणद्वयं यं परिहृत्य गच्छतः।
न लङ्घनं शार्ङ्गभृतः कृतं भवेत्तुरंगमाला च न भङ्गमश्नुते॥ १६॥
अयं स कण्ठीरवतामुपागमद्विपाटनार्थं दनुजेन्द्रवक्षसः।
इतीव भीतः कमलापतेः स्थितिं न यत्र धत्ते कलिकालकुञ्जरः॥१७॥

XVII. 10. कृतास्पदैः° Ms.—XVII. 12. °भियेव Ms.—XVII. 13. स्थायिनि Ms.—XVII. 17. °विपादनार्थं Ms.

अवैमि नारायणनाभिपङ्कजं न लभ्यते यत्र मधुव्रतोत्करैः।
दिवानिशं येन विनिःसरन्ति ते निभेन कालागुरुधूपसंपदाम् ॥१८॥
यदीयशृङ्गेषु विभाति मौक्तिकप्रभाभरैः काञ्चनकुम्भमण्डली।
तृषा विनिक्षिप्य मुखं तुरंगमैः कृता खरांशोरिव फेनसङ्गिनी ॥१९॥
पुरंध्रिनृत्येषु विनिर्यदंशुभिः प्रसर्पदानन्दजलैरिवेक्षणैः।
श्रियं सजीवा इव यत्र संततं वहन्ति रत्नोत्करशालभञ्जिकाः ॥२०॥
वितानरत्नप्रतिबिम्बडम्बरैर्विभान्ति यत्प्राङ्गणसीम्नि लासिकाः।
अवाप्तविद्याधरराजसुन्दरीपदा इव व्योम्नि विहर्तुमुद्यताः ॥ २१ ॥
अकारयत्कारणमानुषः पुरस्तडागमेतस्य स रुद्धदिङ्मुखम्।
उपैति येनानुपमश्रिया तुलामसौ गतश्रीः कथमम्भसां निधिः ॥२२॥
नभःस्रवन्त्या इव शेषवारिभिः परिच्युतैरच्युतपादपद्मतः।
प्रविश्य देवालयगर्भमागतैर्विपाण्डुभिर्यः सलिलैर्विशोभते ॥ २३ ॥
प्रदानलोभादिह भर्तुरस्य चेत्कदाचिदागच्छति कुम्भसंभवः।
छिनद्मि तद्दर्पमितीव यस्तटत्रुटद्विटङ्कोर्मिरवेण गर्जति ॥ २४ ॥
किमादृतक्षारपयोधिसंगमा बिभर्षि भागीरथि दुर्भगाव्रतम्।
इतीव यः कर्षति हर्षगद्गदस्तरंगहस्तैर्नभसः सुरापगाम् ॥ २५ ॥
अवाप्तबन्धेन लघुत्वमब्धिना वितर्क्य पित्रा सुरराजकुञ्जरः।
प्रसूतमात्मानमनिन्दितात्मनो ब्रवीति यस्माद्ध्रुवमभ्रमोः पुरः ॥२६॥
निपीय यत्पाथसि नूनमम्बुदैरवापिते शुक्तिषु मौक्तिकश्रियम्।
पुराणमुक्तामणिभिर्न लप्स्यते कुचस्थलारोहणमेणचक्षुषाम् ॥ २७ ॥
अपास्य पाथोधिमसंख्यनिम्नगामुखार्पणोच्छिष्टमरोचकादिव।
तपात्यये जह्रुरुपान्तशैलजाः कुमारतां यस्य सगर्वमापगाः ॥ २८ ॥

---

XVII. 20. सालभंजिकाः Ms.—XVII. 23. नभःश्रवंत्या Ms.—XVII. 26. ब्रतीति Ms.

निरन्तरं ब्रह्मपुरीभिरावृतं चकार तत्रैव पुरं स पार्थिवः ।
विरिञ्चिलोकात्सुरलोकतश्च यद्विभूष्य भागाविव कौतुकात्कृतम् ॥२९॥
क्षपासु यत्रैकमपास्य चुम्बति द्वितीयवातायनमङ्गनामुखे ।
विशङ्कितः सौधविटङ्कलङ्घनात्प्रविश्य मध्यं व्रजतीव चन्द्रमाः ॥३०॥
यदीयसोपानपथाधिरोहणे नितम्बिनीनां विनिपातभीतितः ।
मयूखदण्डैस्तपनीयनिर्मिताः करावलम्बं ददतीव भित्तयः ॥ ३१ ॥
यदग्रवातायनशृङ्गसद्मनामतीव तुङ्गत्वमवाप दूषणम् ।
यदत्र चित्रस्थितकुञ्जरक्रुधा प्रधावनं शक्रगजस्य शङ्क्यते ॥ ३२ ॥
स्थितासु यत्रोपरि भूमिकुट्टिमस्थलीषु तुङ्गासु निरन्तरासु च ।
त्यजन्ति मार्गे तुरगाः कियत्यपि ध्रुवं निरालम्बगतिश्रमं रवेः॥३३॥
निशासु यत्र प्रतिबिम्बवर्त्मना समागतश्चारुदृशां निशाकरः ।
विलासदोलायितकुण्डलाहृतः कपोललावण्यजले निमज्जति ॥ ३४ ॥
पिता हरिः श्रीर्जननी तयोरिदं पुरं ममैवेति विचिन्तनादिव ।
अजस्रमन्यायसहस्रकारिणः स्मरस्य यत्रास्ति न कश्चिदङ्कुशः॥३५॥
ददौ स दानानि महान्ति षोडश प्रतापशाली प्रतिपर्व पार्थिवः ।
तदन्तिकाद्दानजलैः सकर्दमान्निपातभीत्येव कलिः पलायितः ॥ ३६ ॥
अधत्त तुङ्गेषु सुवर्णराशिषु प्रदानशीलस्तृणबुद्धिमेव सः ।
बभूव लोभास्पदमस्य भूपतेर्यशः परं चन्दनपिण्डपाण्डुरम् ॥ ३७ ॥
सुवर्णदानप्रवणेऽत्र शङ्कितः सुवर्णशैलः शिखरैः समुन्नतैः ।
समस्पृशत्पारदपिण्डशङ्कया त्रिपाण्डुरत्वार्थमिवेन्दुमण्डलम् ॥ ३८ ॥
रिपुं विजित्य द्विजकल्पशाखिना कृतेऽमुना हेमतुलाधिरोहणे ।
गिरेरगस्त्यागमशङ्कया चिराद्बभूव तस्योन्नमने मनोरथः ॥ ३९ ॥

---

XVII. 30. °लाङ्घनात् Ms.—XVII. 32. शंकते Ms.—XVII. 37. बुद्धिरेव Ms —XVII. 38. पारत° Ms.

अयच्छत स्वच्छमतीव काञ्चनं विशङ्कय यस्मात्कनकक्षमाधरः।
अदर्शयत्कालिकयेव संगतिं स्वहेम्नि संक्रान्तिनिभान्नभःश्रियः॥४०॥
प्रदानलीलारसिकः प्रतापवान्विधाय रिक्तानि कुलानि भूभुजाम्।
अपूरयत्सोर्थिगृहाणि हेमभिर्यशोभिराशावदनानि चोज्ज्वलैः॥४१॥
कृतस्थितिर्मूर्धनि चक्रवर्तिनां स विश्वचक्रर्द्धिविधानतत्परः।
उदारशीलः प्रतिकूलतामगाद्दरिद्रनिर्माणपरस्य वेधसः॥४२॥
विपक्षदुर्भिक्षकदर्थितश्चिरं स शौर्यकण्डूलभुजः क्षितेः पतिः।
निशम्य चोलं बलगर्वितं पुनर्जगाम काञ्चीं समनीकतृष्णया॥४३॥
श्रियः समुत्थापनवार्धिमन्थनं कलिप्रियस्येक्षणपारणं मुनेः।
क्रयापणं निर्जरपण्ययोषितां क्रमेण तौ तत्र रणं वितेनतुः॥४४॥
महाभटानां करवालयष्टयः समुच्छलद्वीररसोर्मिनिर्मलाः।
विनिर्गताः कोशबिलोदरात्ततः कृतान्तपाशोरगसंनिभा बभुः॥४५॥
परस्परं मत्सरतः प्रधाविताः प्रभूतसौभाग्यवशाज्जयश्रियः।
किमप्यखिद्यन्त बलद्वये भटाः पुरोगतैः शीघ्रतया शरैरपि॥४६॥
हृदि प्रविष्टं दशनं निजासिना निकृत्य कश्चित्करिणं न्यवारयत्।
चकार रन्ध्रे कृतकीलकार्पणः प्रतिक्रियां जीवविनिर्गमस्य च॥४७॥
अतिष्ठदंशे सुभटस्य चञ्चलं शिरः क्षुरप्रेण यदर्धखण्डितम्।
तदेष वामेन विधृत्य पाणिना प्रधावितः कं न चकार वन्दिनम्॥४८॥
सकङ्कटः कश्चिदुरस्तटत्रुटत्पृषत्कनिष्ठ्यूतहुताशनो भटः।
विवेद नो धूमलताभिशङ्कया मुखे कृपाणं रिपुणा निवेशितम्॥४९॥
रदाङ्कुरप्रोतमरातिदन्तिना मुखं दधानः पुलकोत्कराञ्चितम्।
पिबन्निवालक्ष्यत कोपि लीलया मृणालदण्डेन यशःसुधारसम्॥५०॥

---

XVII. 40. प्रयच्छत Ms.—XVII. 42. उदारशील प्र° Ms.—XVII. 45. विनिर्गता को° Ms.—XVII. 49. रिपुना Ms.—XVII. 50. °राञ्चतं Ms.

विपक्षशस्त्रक्षपणैः पुनःपुनः क्षताखिलग्रन्थि निजास्थिपञ्जरम् ।
चकार चण्डद्युतिमण्डलोदरे सुखप्रवेशार्थमिवापरो भटः ॥ ५१ ॥
पदेपदे शोणितपङ्कपातिनी दिनेश्वरस्य प्रतिबिम्बमालिका ।
अवापदापानकुतूहलागतक्षपाचरस्त्रीचषकोपमेयताम् ॥ ५२ ॥
लघु प्रहर्तुं प्रतिपक्षमक्षमः प्रविष्टनाराचचयातिभारतः ।
भटेन केनापि सरोषमीक्षितः प्रभूतवैलक्ष्यवता निजो भुजः ॥ ५३ ॥
भटेन नीतः श्रुतिहस्तखण्डनान्महाकरी निग्रहणोचितं विधिम् ।
ममज्ज लज्जामिव धारयन्भृशं कृशानुवर्णे रुधिरापगाभरे ॥ ५४ ॥
रदद्वयेन स्फुटितेन पाटनात्परिस्फुटद्दन्तचतुष्टयद्युतिः ।
अमर्त्यभावं भटपेटके भजत्यमर्त्यदन्तित्वमवाप कुञ्जरः ॥ ५५ ॥
विषाणिनां तीक्ष्णखुरप्रखण्डितास्तद्दूरमुड्डीय रदाङ्कुराश्च्युताः ।
सुरप्रसूनावलिशङ्किभिर्भटैर्न वञ्चितास्तान्मुकुटेष्वताडयन् ॥ ५६ ॥
निवेशनीयौ न शिरीषकोमलौ भुजौ त्वया संवरणस्रजः पदे ।
महार्घपुण्ये समयेत्र मेनके द्युमालिकास्ते कलयन्ति लुब्धताम्॥५७॥
'न भर्तृदुर्भिक्षमिहास्ति किंचन किमन्यया स्वीकृतमेव वाञ्छसि ।
विलोपयिष्यन्ति तव प्रगल्भतां स्वयं परीक्षाविषये सुराङ्गनाः ॥५८॥
अमी विमानेष्वधिरोपितास्त्वया मुधैव मूर्छामुकुलीकृतेक्षणाः ।
अवाप्य संज्ञां कृतफालमुत्सुकाः पतन्ति पश्य प्रधनाङ्गणे पुनः॥५९॥
विभिन्नमर्यादममुष्य चेष्टितं भटस्य पश्य प्रथमातिथेरपि ।
विमानवातायनतो यदन्यया विलोकितस्तां प्रति सत्वरोभवत् ॥६०॥
कयात्र माला प्रथमं समर्पिता न वेद्मि वादे युवयोस्तदन्तरम् ।
तदेष सौभाग्यनिधिर्भटाग्रणीः करोतु वाचा स्वयमेव निश्चयम्॥६१॥

---

XVII. 53. °मीक्षित: Ms.—XVII. 56. °स्तदूरमु° ; रदांकुराश्च्यु° Ms.—XVII. 58. किंचन omits Ms.

विलोभ्य सौभाग्यमदाद्भटीनया सलीलमन्तर्हितयां प्रतारितः।
अयं स्मरान्धस्तरसा पराङ्मुखीं भ्रमात्पिशाचीमुपसृत्य मुञ्चति॥६२॥
न नारदादस्ति परो विशारदः परोपकारप्रवणासु वृत्तिषु।
क्षणात्समुत्पाद्य महारणानि यः करोति नः कामुकदुर्गतिच्छिदम्॥६३॥
सहर्षमित्यप्सरसामजायत प्रजागरं पञ्चशरस्य तन्वती।
प्रवीरकण्ठग्रहशान्तकौतुकप्रधावितानां श्रवणामृतं कथा॥ ६४॥
अत्रान्तरे नरपतिर्जयकुञ्जरस्य ज्यानादनिष्ठुरमधिष्ठितपृष्ठपीठः।
शिक्षाशरव्यवदरातिचमूभटानां नाराचपङ्क्तिभिरपूरयदाननानि॥६५॥
आरोहकान्करिषु वाजिषु चाश्ववारा-
न्प्रोतान्पदातिनिवहांश्च विधाय भूमौ।
नामाङ्कितैरिषुभिरेष चुलुक्यवीर-
श्चोलस्य कीलितमशेषबलं व्यधत्त॥ ६६॥
ब्रूमः किमन्यदयमुत्सहतेस्म यत्र
दृष्ट्येव तत्र गतिराविरभून्नृपाणाम्।
कारागृहे पतनमाशुपलायनं वा
चोलोपि शीघ्रमपसारमतश्चकार॥ ६७॥
अथ शिथिलितचापश्चोललक्ष्मीं गृहीत्वा
कृतविविधविनोदस्तत्र काञ्चीनगर्याम्।
निजनगरमगच्छत्सान्द्रमातङ्गसेना-
भरभरितदिगन्तः कुन्तलक्ष्माभुजंगः॥ ६८॥

॥इति श्रीविक्रमाङ्कदेवचरिते महाकाव्ये त्रिभुवनमल्लदेवविद्यापतिकाश्मीरकभट्टश्रीबिल्हणविरचिते सप्तदशःसर्गः॥

XVII. 66. आरोहकान्क° Ms.—XVII. 67. दृयेव; °न्नृपानां Ms.—XVII. 68. मातङ्ग om. Ms.

काश्मीरेषु प्रवरपुरमित्यस्ति मुख्यं पुराणां
यातं गौरीपरिणयविधौ साक्षितामिन्दुमौलेः ।
यस्यायान्ति प्रकृतिकुटिलास्ते वितस्तास्तरंगाः
स्वेच्छाधावत्कलियुगगजाधोरणत्वेङ्कुशत्वम् ॥ १ ॥
उद्यानेभ्यः सकलभुवनाश्चर्यमाधुर्यधुर्यं
पीत्वा द्राक्षारसमिव करैर्जातसंतापशान्तिः ।
ज्येष्ठाषाढेष्विव कमलिनीकामुको यत्र धत्ते
रत्नश्रेणीकिरणकलिकाकोमलामंशुमालाम् ॥ २ ॥
कृत्वा शैलं करतलतुलारूढमर्धेन्दुमौले-
र्हास्यज्योत्स्नां दशसु विसृजन्दिक्षु दर्पाद्दशास्यः ।
यस्मादुच्चैःस्फुरितमहसां ब्राह्मणानां निवासा-
च्छापत्रस्तस्त्वरितमगमद्दूरतः पुष्पकेण ॥ ३ ॥
उत्तुङ्गानां मणिगृहभुवां यत्र वातायनेषु
व्याख्याभिख्याप्रणयिनि जगद्दुर्लभे सूरिचक्रे ।
देवाः प्रोद्यद्विपुलपुलकाः किं न वर्षन्ति पुष्पै-
र्नाशङ्कन्ते यदि सुरगुरोस्तत्र वैलक्ष्यदीक्षाम् ॥ ४ ॥
धत्ते यस्याः स्फटिकशुचिभिः क्षालयन्त्या यशोभिः
स्थित्या गौरीगुरुरपि गिरिर्नूनमुच्चैः शिरांसि ।
गाङ्गस्पर्धोद्धुरमधुमतीसैकतोत्तंसहंसी
विद्यारक्षाधिकृतमकरोत्सा स्वयं शारदा यत् ॥ ५ ॥
ब्रूमः सारस्वतकुलभुवः किं निधेः कौतुकानां
तस्यानेकाद्भुतगुणकथाकीर्णकर्णामृतस्य ।

XVIII. 1. जातं; °विधौ Ms.—XVIII. 3. दशभुवि; पुष्पकेन Ms.—XVIII. 5. यशोभिः om. Ms.

यत्र स्त्रीणामपि किमपरं जन्मभाषावदेव
प्रत्यावासं विलसति वचः संस्कृतं प्राकृतं च ॥ ६ ॥
मन्ये मन्थाचलविदलितान्निर्गता दुग्धसिन्धो-
र्भूत्वा यस्मिन्नमृतलहरी सत्कवीनां वचांसि ।
प्रेमाकूतं कुवलयदृशां शीकरैः पूरयन्ती
द्राक्षाखण्डेष्वमृतकिरणापाण्डुषु स्थैर्यमाप ॥ ७ ॥
दुर्लक्षत्वं कलियुगदृशां प्रापिते ब्रह्मधाम्ना
क्षिप्त्वा विद्याविभवमखिलं यत्र विश्वासधाम्नि ।
स्थाने तत्र त्रिनयनगुरोर्निर्जने नूनमद्रेः
सा वाग्देवी भजति शमिताशेषतापा तपांसि ॥ ८ ॥
तीरद्वंद्वप्रणयिभवनव्रातवातायनस्थ-
स्वैरक्रीडोच्छलितमिथुनच्छिन्नहारावकीर्णा ।
यस्योत्सङ्गे कुलसरिदसौ नीलकण्ठप्रसूता
धत्ते तारातिलकितनभःसङ्गिगङ्गानुकारम् ॥ ९ ॥
स्नानक्रीडाव्यसनसमये कुङ्कुमं कामिनीनां
यत्रोत्तार्य स्तनपरिसराद्गृह्णती कान्तमङ्के ।
ईर्ष्यामर्षादिव निरवधेर्वीचिहस्तैर्वितस्ता
कर्षत्यासां प्रतिकलमलिश्यामलान्केशपाशान् ॥ १० ॥
यस्मिन्क्वापि स्फुरति ललिता श्रीः कटाक्षच्छटासु
श्रीमद्भट्टारकमठपुरोपान्तसीमन्तिनीनाम् ।
या निःशङ्कं श्रुतिकुवलयस्यापलापप्रवृत्ता
भग्ना किंचित्परिमलमिलद्भृङ्गकोलाहलेन ॥ ११ ॥
यस्मिन्तद्याः कथमशिथिलप्रेङ्खितभ्रूलतानां

XVIII. 7. प्रमाकूतं; °किरणवाण्डुषु Ms.—XVIII. 10. निरवत्रिर्वी° Ms.—XVIII. 12. °प्रेषित° Ms.

किंचिल्लीलामसृणमुकुलाः कामिनीदृष्टयस्ताः।
यासां त्रासाकुलितहरिणप्रेयसीभङ्गुराणा-
मुत्सङ्गस्थः किमपि भजते चापलं पुष्पचापः॥ १२॥
यस्य भ्राम्यद्भ्रमरपटलश्यामकेलिद्रुमाणा-
मारामाणामविरलतया कोप्यसौ संनिवेशः।
यस्मिन्रामाः कुसुमधनुषं दृग्भिरुन्मार्गभर्ग-
क्रोधज्वालाकिसलयचये सुप्तमुत्थापयन्ति॥ १३॥
भङ्गाल्लङ्कापतितरलिताद्याः शिला विप्रकीर्णाः
प्राप्यैतासां स्फटिकशिखरी वेद्मि पर्यन्तकोपि।
आस्ते गौरीपतिवृषखुरक्षोदचिन्हान्यपश्य-
न्यद्गेहानां कलहविमुखः स्फाटिकेष्वङ्गणेषु॥ १४॥
यक्षग्रस्ता धनपतिपुरी निष्कलङ्का न लङ्का
सातङ्केव त्रिदशनगरी मेरुपृष्ठेधिरूढा।
इत्यप्राप्यप्रतिभटतया नूनमुच्चैः सगर्व
यत्प्रद्युम्नक्षितिधरनिभादुत्तमाङ्गं बिभर्ति॥ १५॥
काव्यं येभ्यः प्रकृतिमुभगं निर्गतं कुङ्कुमं च
च्छायोत्कर्षाद्भवति जगतां वल्लभं दुर्लभं च।
यस्मिन्नन्तःस्थितवति जगत्सारभूते प्रयाताः
काश्मीरास्ते नियतमुरगाधीशरक्षास्पदत्वम्॥ १६॥
लीलावल्गत्सरसमसृणभ्रूविलासानि यासां
कन्दर्पस्त्री यदि युगशतैः शिक्षते वीक्षितानि।
रामाः श्यामा रमणरुचयस्ताः कियत्यो न यस्मि-

XVIII. 14. प्राप्तैतासां Ms.—XVIII. 15. निःकलंका Ms.—XVIII. 16. °मुभगं Ms.—XVIII. 17. Ms. has twice.

न्हर्षोत्ताला: सरणिषु रणत्काञ्चय: संचरन्ति ॥ १७ ॥
देवोद्यानेष्वपि तिलकतां पुण्ययोगादवाप्तै-
र्विस्मर्यन्ते न खलु निखिलाश्चर्यसारा यदीया: ।
श्रीखण्डाम्भ:स्नपितमुरलप्रेयसीगण्डपाण्डु-
द्राक्षाखण्डस्तबकितलतामण्डपास्ते वनान्ता: ॥ १८ ॥
अस्त्यन्योन्यग्रथितलहरीदोर्लताबन्धबन्धु-
र्मध्ये यस्य क्षपितकलुष: संगम: पुण्यनद्यो: ।
यस्योत्सङ्गे हलधरकृतास्ते जयन्त्यग्रहारा
ये धर्मस्य क्षतकलिभया: शैलदुर्गीभवन्ति ॥ १९ ॥
यस्मिन्किंचिन्न तदुपवनं यत्र नो केलिवापी
नैषा वापी न विषमधनुष्कार्मणं यत्र रामा: ।
नासौ रामा मनसिजकथाघातभग्ना युवान:
कामं यस्यां न निविडतरप्रेमबन्धे पतन्ति ॥ २० ॥
यद्भूषायां विहितवपुषस्तस्य विश्वैकबन्धो:
स्फूर्ति: कीर्ति: परमनुपमा सापि विद्यामठस्य ।
यस्मिन्नङ्गीकृतकलकला मेखला: कामिनीनां
पृष्ठे लग्नं कुसुमधनुषस्त्र्यक्षमप्याक्षिपन्ति ॥ २१ ॥
वैतस्तानां स खलु पयसां संगमो यत्र चर्या-
मर्यादाया: कृतयुगभुव: पात्रभूतोद्धुतश्री: ।
दोलालीलातरलगतिषु प्रेङ्खिता यत्तरंगै-
रुत्सङ्गेषु त्रिदशसुदृशां देहभाज: पतन्ति ॥ २२ ॥
तत्पर्यन्तस्थितगुणनिकामण्डपं यत्र धत्ते

---

XVIII. 18. श्रीषंडांभ:; यदीया: Ms.—XVIII. 21. परमु° Ms.—XVIII. 22. प्रेषिता Ms.

धाम व्योमाङ्गणतिलकतां क्षेमगौरीश्वरस्य ।
रामा रामानुकरणविधौ यत्र नाट्यप्रयोगे
योगस्थानामपि सपुलकं गात्रमासूत्रयन्ति ॥ २३ ॥
संग्रामोर्वीपरिवृढमठप्रान्तसीमन्तितोसौ
यस्मिन्नक्ष्णोर्वितरति सुधां चन्द्रसीमाप्रदेशः ।
यत्रानन्तक्षितिपतिकृतास्ते वितस्तोपकण्ठे
याताः कान्त्या हरधवलया हारतामग्रहाराः ॥ २४ ॥
गर्जद्वातायनविततयः शास्त्रगोष्ठीवरिष्ठै-
स्ताः काष्ठीलद्विजवसतयो यत्र नेत्रोत्सवाय ।
यासु त्रासं विदधति कलेर्दर्शनादेव विप्राः
सायं प्रातः प्रहुतहुतभुग्धूमधूम्रैः शिरोभिः ॥ २५ ॥
यत्रानन्तक्षितिपगृहिणीशंकरागारपार्श्वे
तन्नुङ्गिम्ना त्रिभुवनमनोरञ्जनं गञ्जधाम ।
श्रुत्वाश्रुत्वा रुतमविरतं यत्र पारापतानां
दक्षाः कण्ठध्वनिषु शनकैः पौरकन्या भवन्ति ॥ २६ ॥
यत्क्षेत्रेषु स्थितिमरचयद्वल्कलं यत्सिषेवे
जाने जैत्रं किमपि तपसस्तस्य माहात्म्यमेतत् ।
तत्रत्यस्य प्रथमवयसः स्त्रीजनस्याङ्गकानां
यत्काश्मीरं कनकमुहृदामन्तरङ्गत्वमेति ॥ २७ ॥
गेहं यत्र प्रवरगिरिजावल्लभस्याद्भुतं त-
त्केषामाशां सुरपतिपुरारोपणे नातनोति ।
यद्यातस्य प्रवरनृपतेर्द्यां शरीरेण सार्धं
स्वर्गद्वारप्रतिममुपरि च्छिद्रमद्यापि धत्ते ॥ २८ ॥

---

XVIII. 25. काष्ठिल°; दर्शनादेव Ms.

दृष्ट्वा यस्मिन्नभिनयकलाकौशलं नाटकेषु
स्मेराक्षीणां मसृणकरणासङ्गदत्ताङ्गहारम् ।
रम्भा स्तम्भं भजति लभते चित्रलेखा न रेखां
नूनं नाट्ये भवति च चिरं नोर्वशी गर्वशीला ॥ २९ ॥
यस्मिन्नुर्वीपतिगृहततेस्तुङ्गिमा वर्ण्यते किं
तस्याश्च स्वचतुरवनिताभूषितानेकभूमेः ।
जाने यस्यां कुसुमधनुषः स्वर्गरामामनांसि
क्रीडावातायनकृतपदस्यैव लक्ष्यिभवन्ति ॥ ३० ॥
यत्र स्त्रीणां मसृणघुसृणालेपनोष्णा कुचश्री-
स्ताः कस्तूरीपरिमलमुचः पङ्क्तिका राङ्कवाणाम् ।
नौपृष्ठस्थाः शिशिरसमये ते वितस्ताजलान्तः
स्नानावासाः प्रचुरमपि च स्वर्गसौख्यं दिशन्ति ॥ ३१ ॥
वक्त्रन्यस्तैस्तुहिनशकलैर्दन्तुरा वारिकुम्भाः
काश्मीरीणां सरसकदलीकोमला गात्ररेखाः ।
भीष्मग्रीष्मक्लमविरतये सर्वसाधारणत्वं
यस्मिन्नायान्त्यपि हिमशिलाशीतलानि स्थलानि ॥ ३२ ॥
सत्यत्यागप्रमुखनिखिलोत्कर्षसंपत्तिसीमा
तस्मिन्नासीदवनिवनितावल्लभोऽनन्तदेवः ।
वैरिस्तम्बेरमघनघटागर्जितानामगम्ये
चक्रे धारापयसि यदसेः कीर्तिहंसीनिवासम् ॥ ३३ ॥
दत्त्वा शोकं शकपरिवृढप्रौढसीमन्तिनीनां
येन क्रीडाविदलितदरद्दीर्घदर्पः कृपाणः ।
अस्पृश्यानामिव परिचयाद्बिभ्रता दोषशङ्कां

---

XVIII. 32. °शकलेर° Ms.

धौतः क्षोणीवलयजयिना जन्हुकन्याजलेषु ॥ ३४ ॥
कर्तुं कीर्त्या तिलकमलकागोपुराणां गतेन
क्रौञ्चस्याङ्के भृगुपतिशरच्छिद्रमद्रेर्विलोक्य ।
येन क्रीडालवशबलिताः पीवरे बाहुदण्डे
चण्डध्वाने धनुषि च रुषा सूत्रिता दृष्टिपाताः ॥ ३५ ॥
सिद्धैरध्यासिततटभुवः स्नातसप्तर्षिहस्त-
न्यस्तभ्राम्यत्तिलतिलकितस्रोतसो मानसस्य ।
यत्कान्ताभिः शिरसि विधृताः सारसौभाग्यलोभा-
त्कैलासस्थत्रिनयनवधूक्षालिताङ्गास्तरंगाः ॥ ३६ ॥
यः संतोषं चरितविषये पूर्वपुंसां न भेजे
सारग्राही रघुपतिकथामत्सरादेकवीरः ।
चक्रुः क्रीडोद्धृतहरगिरेस्ते हि रोहत्कलङ्का
लङ्काभर्तुर्भुजतरुवनच्छेदनं नार्धचन्द्रैः ॥ ३७ ॥
चम्पासीम्नि क्षितिपतिकथाधाम्नि दार्वाभिसारे
त्रैगर्तीषु क्षितिषु भवने भर्तुलक्षोणिभर्तुः ।
क्रीडाशैलीकृतहिमगिरेर्हासभीतेव यस्य
भ्राम्यत्याज्ञा सुकृतवसतेर्भूप्रतापोदयानाम् ॥ ३८ ॥
कृत्वा मध्ये मठमनुपमोत्तुङ्गदुर्गानुकारं
वैतस्त्येन ग्रथितपरिखारेखमम्भोभरेण ।
लग्नाः शृङ्गैर्नभसि विजयक्षेत्रभट्टाग्रहाराः
प्राकारत्वं कलिभयभिदे येन धर्मस्य नीताः ॥ ३९ ॥
देवी तस्य प्रचुरयशसश्चन्द्रिकेवेन्दुजाता
याता ख्यातिं जगति सुभटेत्यादिभार्या बभूव ।

XVIII. 37. च्छेदन Ms.

मध्ये यस्याः स्थितिमनुपमां सापि कुण्ठानुकर्तुं
वैकुण्ठोरःस्थलजलधरोत्सङ्गसौदामिनी श्रीः ॥ ४० ॥
तस्यास्त्यागव्रतविलसिते कः परिच्छेदमुद्रा-
माविष्कर्तुं प्रभवति दयाक्षान्तिदाक्षिण्यसीम्नः ।
लक्ष्मीं यस्याः क्षितितलगतां पाददासीमकार्षी-
द्भर्तुः क्षोणीपतिशतशिखारत्नशाणः कृपाणः ॥ ४१ ॥
नो कायस्थैः कुटिललिपिभिर्नो विटैश्चाटुदक्षै-
र्न प्रत्यक्षस्तवनपटुभिर्लुण्ठिता गायनैश्च ।
देवागारद्विजगुरुगृहाण्येव यत्संगृहीता
याता लक्ष्मीर्निजचपलतादोषशुद्ध्यर्थिनीव ॥ ४२ ॥
श्रीकाश्मीरक्षितिभुजि गते पश्यतां यद्गुणाना-
मुहुश्चिन्ताक्रमपरिचयं कानि नान्तःपुराणि ।
स्वच्छा कीर्तिर्नभसि बिसिनीपत्त्रमित्रे लुलोठ
श्च्योतद्धारासलिलमकरोद्धामलक्ष्मीः कृपाणम् ॥ ४३ ॥
कीर्तिज्योत्स्नास्नपितभुवनश्रीरधिष्ठानमध्ये
शोभाढ्येद्धं मठमकुरुत स्वीयनामाङ्कितं सा ।
यस्मिन्विद्यारसिकमनसामास्पदे देशिकानां
का नामाक्ष्णोर्व्रजति न सुधावर्तितां नर्तितश्रीः ॥ ४४ ॥
भाण्डागाराण्यकृत विदुषां सा स्वयं भोगभाञ्जि
स्वातन्त्र्येण ग्रहणमवनेर्ब्राह्मणानामवादीत् ।
यामस्तम्बेरमसहचरस्फूर्जदाशागजेन्द्र-
क्षोणीकोशप्रणयिनि यशस्येव रक्षामकार्षीत् ॥ ४५ ॥

---

XVIII. 41. भाविःकर्तुं Ms.—XVIII. 42. लुटिता Ms.—XVIII. 45. °वनेर्ब्रा° Ms.

चक्रे धाम त्रिभुवनगुरोः सा वितस्तासमीपे
कामारातेः शिखरनिकरक्षुण्णनक्षत्रमार्गम् ।
कूजत्काञ्चीनिवहपिहितज्याध्वनिर्नर्तकीनां
यस्योपान्ते भवति न भवक्रोधपात्रं मनोभूः ॥ ४६ ॥
यस्या भ्राता क्षितिपतिरिति क्षात्रतेजोनिधानं
भोजक्ष्माभृत्सदृशमहिमा लोहराखण्डलोभूत् ।
शङ्के लक्ष्म्याः शिरसि चरणं न्यस्य वक्षःस्थितायाः
प्राप्ता लीलातिलकतुलनां यन्मुखे सूक्तिदेवी ॥ ४७ ॥
यस्य प्राप्ताद्भुतपरिणतेः कर्कशे तर्कमार्गे
त्यागः कासां विचरति गिरां गोचरे कान्तकीर्तेः ।
येन न्यस्ता दलितविपदां कोविदानां गृहेषु
श्रीर्नाद्यापि स्वपिति ललनाभूषणानां निनादैः ॥ ४८ ॥
गण्डाभोगोड्डमरविलुठद्बाष्पधाराशतेन
व्यातन्वानः कुचयुगतटीः पङ्किलाः सुन्दरीणाम् ।
यस्य क्रीडाकवलमकरोद्राजपुर्याः प्रतापं
बाहुर्बाहुस्थलकमलिनीराजहंसाम्बुवाहः ॥ ४९ ॥
श्रोणीबन्धे कुवलयदृशां द्रागवज्ञारसज्ञैः
पार्श्वद्वंद्वेप्यतनुत सभामण्डनं पण्डितालीम् ।
रत्नच्छायाच्छुरणसुभगस्वर्णपत्त्रावमानी
मानी मेने श्रवसि च कथां वैष्णवीं भूषणं यः ॥ ५० ॥
पुण्यैरैरावतकरिकरोच्चण्डदोर्दण्डशाली
देव्यां तस्यां कलशनृपतिस्तस्य जातस्तनूजः ।

XVIII. 49. गंड्भोग° Ms.—XVIII. 50. °ञ्चभग° Ms.—XVIII. 51. °कळस° Ms.

संख्योत्सङ्गादपसृतवतां भूभुजां वल्लभा श्रीः
खड्गे यस्य द्विपमदमषीपङ्कलिप्ते लुलोठ ॥ ५१ ॥
दर्पाध्मातप्रतिभटनृपव्रातसेनाशिरांसि
त्यक्त्वा सान्द्रोल्लसदसिलताशैवलश्यामलानि ।
हेमाम्भोजप्रतिमवदनालोकनादेव यस्य
प्राप्ता लक्ष्मीश्चरणनिकटं कीर्तिहंसावतंसा ॥ ५२ ॥
दिग्यात्रासु स्फटिकविशदच्छायमच्छोदमेत्य
भ्राम्यन्निन्द्रायुधखुरपुटोट्टङ्कितासु स्थलीषु ।
कादम्बर्याः परिजनमसौ मर्त्यलोकैकचन्द्र-
श्चन्द्रापीडस्तुतिषु विदधे संकुचद्वाग्विलासम् ॥ ५३ ॥
येनोदीच्यां दिशि गतवता वन्दितोसौ गिरीन्द्र-
श्चञ्चच्चण्डीपतिवृषखुरक्षोदलेखावतंसः ।
शङ्के लङ्कापतिकरतलोत्क्षेपलोलस्य यस्य
त्रस्ताः केचित्तलभुवि गणा नाधुनाप्युच्छ्वसन्ति ॥ ५४ ॥
धृत्वा काश्चित्कनककपिशाः कौतुकाद्यक्षकन्याः
प्रत्यागच्छन्धनपतिपुरादुत्तरं मानसं यः ।
दत्ताश्लेषं हरमुकुटतः स्रस्तया नाकनद्या
हेमाब्जानामकृत वसतिं मानसादाहृतानाम् ॥ ५५ ॥
यस्योदारां परिकलयतः शस्त्रशास्त्रप्रतिष्ठां
द्वे प्रेयस्यौ जगति विदिते श्रीश्च वाग्देवता च ।
एका भेजे भुजमभिनवाम्भोदनीलातपत्रा
श्वेतच्छत्रायितसितयशश्चन्द्रिकान्या मुखेन्दुम् ॥ ५६ ॥
अश्वैः कृत्वा पवनगतिभिर्लङ्घनं वालुकाब्धे-

XVIII. 53 भ्राम्यान्नि; पुटोट्टंकि तासु° Ms.—XVIII. 55. श्रस्तया Ms.

यः स्त्रीराज्यं व्यजयत जयापीडतुल्यप्रभावः ।
तत्र श्लाघामसहत पुनर्नैकवीरः स यस्मा-
त्सव्रीडोभूदपि रघुपतौ ताडके ताडकायाः ॥ ५७ ॥

यत्खड्गस्य स्मरणवशतः कालजिह्वासनाभे-
स्त्रासोल्लासत्रुटितमदनोन्मादमुद्रा नरेन्द्राः ।
हर्षं वर्षाजलदपटले कुन्तलेष्वङ्गनानां
क्षोणिलेखास्वपि च मुमुचुः शाद्वलश्यामलासु ॥ ५८ ॥

दृष्ट्वा देव्याः कुचपरिसरे हर्षदेवस्य मातु-
स्तुष्टः सेवानतधनपतिप्राभृतैकावलीं यः ।
कर्तुं वाञ्छन्नखिलभुवनाश्चर्यमस्योपकारं
प्रत्यानीते रघुपतिशरैः पुष्पके खेदमाप ॥ ५९ ॥

खड्गे कुण्ठीभवति शिरसां छेदतः खेदमागा-
द्यः शाणार्थी हरशिखरिणा प्राग्गृहीतोज्झितेन ।
यः पौलस्त्यं तमपि जितवान्सोपि यस्योपमायां
शङ्के लोकोत्तरगुणनिधेर्मुद्रितो रामभद्रः ॥ ६० ॥

मन्थक्षोणीधरविदलिताम्भोधितीव्रक्रुधेव
क्ष्माभृन्मूलान्यपि दलयति व्यायतैर्या तरंगैः ।
सेनाचक्रक्षपितसलिलां तां चकार स्थलं यः
श्रीकाश्मीरक्षितिकुमुदिनीचन्द्रमाश्चन्द्रभागाम् ॥ ६१ ॥

धत्ते यस्यास्तपनदुहितुः शेषकल्लोललीलां
नीलच्छाया तुरगपटली भास्करस्याधुनापि ।
तां कालिन्दीं सकलजयिनो यस्य सेनासमूहः
पृथ्वीलीलालुलितकबरीमेचकामाचचाम ॥ ६२ ॥

---

XVIII. 59. प्राभृतैकावलीं Ms.—XVIII. 61. °कश्मीर° Ms.

उर्वीमुर्वीधरसहचरैः पूरयन्यो यशोभि-
स्तान्निःशेषक्षितिपरिजयी कौरवं क्षेत्रमागात्।
यत्र क्षत्रक्षतजपटले पार्थबाणाभिघातैः
कर्णभ्रष्टं कुरुपतियशोदन्तपत्त्रं ममज्ज॥ ६३॥
यस्य प्रेयान्प्रथमतनयः कं न चक्रे सहर्षं
श्रीहर्षादप्यधिककवितोत्कर्षवान्हर्षदेवः।
तीक्ष्णः स्वस्मिन्कनकवलये येन चक्रे रणेषु
क्ष्माभृच्चूडामणिकषणतः कुण्ठधारः कृपाणः॥ ६४॥
यस्यापूर्वा पदपरिणतिः कापि चर्याविचारे
वाक्चातुर्ये प्रसरति गतिर्वादिनां मौनमुद्रा।
प्रख्यातं तत्त्रिजगति पुनः सर्वभाषाकवित्वं
यस्यास्वादे भवति सिकताकर्कशा शर्करापि॥ ६५॥
येनोत्कण्ठा व्यसनगुरुणा दत्तपातास्तरुण्यः
स्वस्मिन्मूर्छाक्रमपरवशा बाष्पपङ्के लुठन्ति।
तासां गण्डस्थलभुवि पुनः पाण्डिमा वर्ण्यते किं
यत्र स्पष्टीभवति शपथैः श्रोत्रयोर्दन्तपत्त्रम्॥ ६६॥
दुर्गं प्राप्य क्षितिपतियशोधाम यस्यानुजोसौ
कस्याकार्षीन्न खलु पुलकोत्कर्षमुत्कर्षदेवः।
येनारोप्य स्वभुजशिखरे निर्मिता दूरमुर्वी
म्लेच्छक्षोणीपतिहरिखुरक्षोदमुद्रादरिद्रा॥ ६७॥
नाम्नापरो विजयमल्ल इति प्रतापी
भूपस्य तस्य तनयो नयनाभिरामः।
पुष्पोपहारवति नूतनदन्तकान्त्या

XVIII. 65. शिकता° Ms.

वाग्देवता व्यधित यस्य मुखे प्रवेशम् ॥ ६८ ॥
नित्याभ्यासात्परिणतलिपेः स्रष्टुराश्चर्यलेखं
तल्लावण्यं वपुषि ललिते तस्य भूपालसूनोः ।
यत्र स्फूर्जल्लटभललनालोकलोभैकपात्रे
जागर्ति ज्यानिनदमुखरः संततं पुष्पचापः ॥ ६९ ॥
तस्मादस्ति प्रवरपुरतः सार्धगव्यूतिमात्रीं
भूमीं त्यक्त्वा जयवनमिति स्थानमुत्तुङ्गचैत्यम् ।
कुण्डं यस्मिन्नमलसलिलं तक्षकस्याहिभर्तु-
र्धर्मध्वंसोद्यतकलिशिरश्छेदचक्रत्वमेति ॥ ७० ॥
यस्यास्ति खोनमुख इत्युपकण्ठसीम्नि
ग्रामः समग्रगुणसंपदवाप्तकीर्तिः ।
आलानरूपबहुयूपवति प्रविष्टं
नो यत्र बन्धनभियेव कलिद्विपेन ॥ ७१ ॥
ब्रूमस्तस्य प्रथमवसतेरद्भुतानां कथानां
किं श्रीकण्ठश्वशुरशिखरिक्रोडलीलाललाम्नः ।
एको भागः प्रकृतिसुभगं कुङ्कुमं यस्य सूते
द्राक्षामन्यः सरससरयूपुण्ड्रकच्छेदपाण्डुम् ॥ ७२ ॥
कर्तुं कीर्तिप्रणयि कुशलाः कौशिकं गोत्रमुच्चै-
स्तत्र ब्रह्मप्रवणमनसो ब्राह्मणाः केचिदासन् ।
यान्काश्मीरक्षितितिलकतां मध्यदेशावतंसा-
न्गोपादित्यक्षितिपतिरसौ पावनानानिनाय ॥ ७३ ॥
कीर्तिं येषां शतमखसखीमुत्सुकानामवाप्तुं
धूमस्तोमे मखपरिचिते पूरयत्यन्तरिक्षम् ।

XVIII. 72. सरससयू° Ms.

नो केषांचिद्वचनमशृणोन्नाकरोन्नाकचिन्तां
शक्रश्चित्रार्पित इव परं छाययाभूद्दरिद्रः ॥ ७४ ॥

तेषां जगत्त्रयपवित्रचरित्रभाजां
धत्तेस्म मुक्तिकलशः कुलशेखरत्वम् ।
यस्याग्निहोत्रपरिशीलनजेन जाता
स्वेदाम्भसेव कलिकालकलङ्कशान्तिः ॥ ७५ ॥

शङ्के पङ्केरुहवसतिना स्थापिता शान्तिहेतो-
रन्योन्येर्ष्याकलहचतुरा याश्चतुर्ष्वाननेषु ।
एकत्रैव स्वमुखकमले लीलया वल्लभानां
चक्रे तासामपि चतसृणां यः श्रुतीनां निवासम् ॥ ७६ ॥

दाता पराक्रमधनः श्रुतपारदृश्वा
नाम्नास्य राजकलशस्तनयो बभूव ।
प्रालेयभूधरगुहास्तिमिरच्छलेन
यस्याधुनापि मखधूममिवोद्वमन्ति ॥ ७७ ॥

द्राक्षापूर्णान्यखिलजनताभोगहेतोर्वनानि
व्याख्यास्थानान्यमलसलिला यस्य कूपाः प्रपाश्च ।
स्थानेस्थाने सुकृतवसतेर्मण्डलाग्रावतंसा
धर्मस्याविष्कृतकलिभयस्याङ्कुरक्षा बभूवुः ॥ ७८ ॥

क्षमासारः सारस्वतरसनिधानं श्रुतिनिधिः
समुत्पन्नस्तस्मादमलयशसो ज्येष्ठकलशः ।
महाभाष्यव्याख्यामखिलजनवन्द्यां विदधतः
सदा यस्य च्छात्रैस्तिलकितमभूत्प्राङ्गणमपि ॥ ७९ ॥

---

XVIII. 74. °मसृणोन्ना° Ms.—XVIII.—77. राजकलसस्त° Ms.

इष्टापूर्तेष्वतिथिविषये सान्त्वने सेवकाना-
मन्येष्वन्येष्वपि च गहनं किं नु तस्योचितेषु।
दृष्टादृष्टोपकरणगणप्रापणे यः प्रवीणां
नागादेवीमलभत शुभस्तोमपात्रं कलत्रम्॥ ८०॥

अङ्कैस्तस्य ज्ज्वलकनकरुचिभिः कार्मणं लोचनानां
सूरेस्तस्मादजनि जगतां शेखरो बिल्हणाख्यः।
सान्द्रैर्वेदध्वनिभिरनभिव्यक्तमञ्जीरनादा
मौञ्जीबन्धात्प्रभृति वदने यस्य वाग्देवतासीत्॥ ८१॥

साङ्गो वेदः फणिपतिदृशा शब्दशास्त्रे विचारः
प्राणा यस्य श्रवणसुभगा सा च साहित्यविद्या।
को वा शक्तः परिगणयितुं श्रूयतां तत्त्वमेत-
त्प्रज्ञादर्शे किमिव विमले नास्य संक्रान्तमासीत्॥ ८२॥

चक्रं यस्याक्रियत वदनप्रेक्षि विद्यावधूनां
श्रीवाग्देव्याश्चरणरजसा कार्मणत्वं गतेन।
याताः सार्धं दिशिदिशि पुनर्बन्धुराः सर्गबन्धाः
कीर्तेः पारिप्लवविदलने सौविदल्ला बभूवुः॥ ८३॥

विद्वत्तायाः स खलु शिखरं प्राप यस्येष्टरामो
ज्येष्ठो भ्राता क्षितिपतिशतास्थानलीलावतंसः।
वक्त्रे काव्यामृतरसभरास्वादशक्तैर्यदीये
दृष्टा देवी सुकविजननी सा प्रपापालिकेव॥ ८४॥

यस्यानन्दः समजनि यशोभाजनस्यानुजोसौ
स्पर्धाबन्धोद्धुरकविमदच्छेदलीलाकुठारः।
प्रस्थे दौःस्थ्यं हिमशिखरिणः प्राप्य काठिन्ययोगा-
ज्जाने जिह्वाकिसलयसखी शारदा यस्य जाता॥ ८५॥

काश्मीरेभ्यः सकलममलं शास्त्रतत्त्वं गृहीत्वा
प्रालेयाद्रेरपि गुणमसौ निश्चितं स्वीचकार।
देशेदेशे कथमपरथा वादिनामाननानि
कुद्धश्चक्रे तुहिनपटलप्लुष्टपद्मोपमानि ॥ ८६ ॥
दोलालोलद्रुतजघनया राधया यत्र भग्नाः
कृष्णक्रीडाङ्गणविटपिनो नाधुनाप्युच्छ्वसन्ति।
जल्पक्रीडामथितमथुरासूरिचक्रेण केचि-
त्तस्मिन्वृन्दावनपरिसरे वासरा येन नीताः ॥ ८७ ॥
निःसामान्यश्रुतगुणकथादत्तवादिज्वराणां
छात्रौघानां दिशिदिशि हठात्तन्वतां यद्यशांसि।
आसीदाशागजमदजलास्वादमत्तद्विरेफ-
श्रेणीगीतध्वनिकलकलः केवलं सोन्तरायः ॥ ८८ ॥
ग्रामो नासौ न स जनपदः सास्ति नो राजधानी
तन्नारण्यं न तदुपवनं सा न सारस्वती भूः।
विद्वान्मूर्खः परिणतवया बालकः स्त्री पुमान्वा
यत्रोन्मीलत्पुलकमखिला नास्य काव्यं पठन्ति ॥ ८९ ॥
यस्योत्तुङ्गैर्मणिमयगृहैर्लीलयोत्तारिता श्री-
र्व्योमोत्तंसा त्रिदशपुरतः प्राप्तसोपानलीलैः।
द्वारे गङ्गां कृतकलकलां तर्जयित्वा प्रविष्टा
कीर्तिर्यस्य स्ववशमकरोत्तत्पुरं कान्यकुब्जम् ॥ ९० ॥
धर्मस्येव व्युपरतकलेर्यत्र गीर्वाणसिन्धु-
स्रोतःकोशे विशति यमुनावेणिभङ्ग्या कृपाणः।
तस्मिन्वारान्कति न कृतिना तीर्थनाथे प्रयागे

XVIII. 86. सकलमलं Ms.

दत्ता विश्वाद्भुतगुणगणोपार्जिता येन लक्ष्मीः ॥ ९१ ॥
मन्ये भ्राम्यत्कलियुगभयादागतस्योपकण्ठे
धर्मस्याध्वश्रमविरमणं शीकरैर्या करोति।
वाणारस्यां पुरि परिहृतो येन तस्यां द्युसिन्धौ
स्नात्वा दैवोपनतकुनृपालोकनोत्थः कलङ्कः ॥ ९२ ॥
कालः कालञ्जरगिरिपतेर्यः प्रयाणे धरित्रीं
तुक्खाराणां खुरपुटरवैः क्ष्मापशून्यां चकार।
श्रीडाहालक्षितिपरिवृढः सोपि यं प्राप्य वृत्तं
कर्णः कर्णामृतरसभरास्वादमन्तस्तताने ॥ ९३ ॥
यस्यातृप्तः स्फटिकगिरिणा तं विनिक्षिप्य वामे
प्रालेयाद्रेः क्षणमभिमुखो दक्षिणः पाणिरासीत्।
तं पौलस्त्यं विदलितवतः सूक्तिनिःस्यन्दशीतां
सीताभर्तुर्व्यरचयदसौ राजधानीमयोध्याम् ॥ ९४ ॥
नीत्वा गङ्गाधरमधरतां डाहलाधीशधाम्नि
क्रीडाक्रान्तप्रतिभटकटैः पूर्वदिक्कोटरेषु।
निर्जित्यैरावतमदजलभ्रान्तभृङ्गालिनादा-
न्सुत्राम्णोपि श्रवसि लुठितं यस्य शङ्के कथाभिः ॥ ९५ ॥
भोजः क्ष्माभृत्स खलु न खलैस्तस्य साम्यं नरेन्द्रै-
स्तत्प्रत्यक्षं किमिति भवता नागतं हा हतास्मि।
यस्य द्वारोड्डमरशिखरक्रोडपारावतानां
नादव्याजादिति सकरुणं व्याजहारेव धारा ॥ ९६ ॥
कक्षाबन्धं विदधति न ये सर्वदैवाविशुद्धा-
स्तद्वाघन्ते किमपि भजते यज्जुगुप्सास्पदत्वम्।

XVIII. 93. नृत्तं Ms.—XVIII. 94. यस्यादृप्तः Ms.—XVIII. 95. °नादान्सु° Ms.

तेषां मार्गे परिचयवशादर्जितं गुर्जराणां
यः संतापं शिथिलमकरोत्सोमनाथं विलोक्य ॥ ९७ ॥
तामप्येष क्षितिपतिशतालोकनौत्सुक्ययोगा-
दाचक्राम क्रमुकविटपिश्यामलामब्धिवेलाम्।
यत्र स्वेच्छाप्रसरमधुनाप्यम्बुराशेर्भिनत्ति
क्षिप्ता तीक्ष्णप्रहरणमिषाद्भार्गवेणार्गलेव ॥ ९८ ॥
खल्वाटत्वं शिरसि घटयन्नम्बुधेर्यश्चकासे
लङ्कानाथापहृततनयापृष्ठलग्नेव धात्री।
सीतावार्त्ताश्रवणचकितेवान्तिके राक्षसानां
सेतोस्तस्माद्यदि परमगान्नास्य कीर्तिः परस्तात् ॥ ९९ ॥
सामान्योर्वीपतिषु विमुखः शेखरोसौ बुधानां
यातस्तस्यां ककुभि शनकैः कौतुकी दक्षिणस्याम्।
यल्लोलाक्षीकुचतटभुवां ब्रूमहे किं गुरुत्वं
यासां शिष्यस्त्रिभुवनविजयी जृम्भते पञ्चबाणः ॥ १०० ॥
नीलच्छत्रोन्मदगजघटापात्रमुत्तस्तचोला-
च्चालुक्येन्द्रादलभत कृती योत्र विद्यापतित्वम्।
अस्मिन्नासत्तिदनु निबिडाश्लेषहेवाकलीला-
वेल्लद्बाहुक्कणितवलया संततं राजलक्ष्मीः ॥ १०१ ॥
दिङ्मातङ्गैरपि सपुलकैः शुश्रुवे यस्य कीर्ति-
र्निद्रामुद्राप्रणयिषु मदास्वादतः षट्पदेषु।
तेन प्रीत्या विरचितमिदं काव्यमव्याजकान्तं
कर्णाटेन्दोर्जगति विदुषां कण्ठभूषात्वमेतु ॥ १०२ ॥

---

XVIII. 98. °त्सुक्यायोग° Ms.—XVIII. 99. शीता° Ms.—XVIII. 101. क्कणितविक्रवलया Ms.

लब्धा लक्ष्मीर्दिशिदिशि कृताः संपदः साधुभोग्याः
प्राप्ता योग्यैः सह कलहतः कुत्र नोच्चैर्जयश्रीः।
गोष्ठीबन्धः सपदि सुजनैः सारनिष्कर्षदक्ष-
प्रज्ञालब्धस्तुतिभिरचिरादस्तु काश्मीरकैर्मे ॥ १०३ ॥
आरुक्षाम नृपप्रसादकणिकामद्राक्ष्म लक्ष्मीलवा-
न्किंचिद्वाग्मयमध्यगीष्महि गुणैः कांश्चित्पराजेष्महि।
इत्यज्ञानमयीमकार्ष्म कियतीं नानर्थकन्थां मनः
स्वाधीनीकृतशुद्धबोधमधुना वाञ्छत्यमर्त्यापगाम् ॥ १०४ ॥
मन्दाकिन्याः पवनचटुलोत्तालवीचीतटकूले
कूलोत्सङ्गे विरचितवतां योगनिद्राभियोगम्।
शेषाः केषामपि परिणतौ वासराः पुण्यभाजां
शान्तस्वान्तस्थितगिरिसुतावल्लभानां प्रयान्ति ॥ १०५ ॥
स्वेच्छाभङ्गुरभाग्यमेघतडितः शक्या न रोद्धुं श्रियः
प्राणानां सततं प्रयाणपटहश्रद्धा न विश्राम्यति।
त्राणं येत्र यशोमये वपुषि वः कुर्वन्ति काव्यामृतै-
स्तानाराध्य गुरून्विधत्त सुकवीन्निर्गर्वमुर्वीश्वराः ॥ १०६ ॥
हे राजानस्त्यजत सुकविप्रेमबन्धे विरोधं
शुद्धा कीर्तिः स्फुरति भवतां नूनमेतत्प्रसादात्।
तुष्टैर्बद्धं तदलघु रघुस्वामिनः सच्चरित्रं
क्रुद्धैर्नीतस्त्रिभुवनजयी हास्यमार्गं दशास्यः ॥ १०७ ॥
यस्य स्वेच्छाशवरचरितालोकनत्रस्तयेव
न्यस्तश्चूडाशशिकलिकया क्वापि दूरे कुरङ्गः।

XVIII. 105. चटुलोताल Ms.—XVIII. 106. गुरून् om. Ms.—XVIII. 107. प्रेमप्रबंधे; रुद्धैर्नीतस्त्रि° Ms.

स व्युत्पत्तिं सुकविवचनेष्वादिकर्ता श्रुतीनां
देवः प्रेयानचलदुहितुर्निश्चलां वः करोतु ॥ १०८ ॥

इति श्रीविक्रमाङ्कदेवचरिते महाकाव्ये त्रिभुवनमल्लदेवविद्यापतिकाश्मीरकभट्टश्रीबिल्हणविरचितेऽष्टादशः सर्गः ॥

**इति श्रीत्रिभुवनमल्लदेवविद्यापतिकाश्मीरकभट्टश्रीबिल्हणस्य कृतिर्विक्रमाङ्काभिधानं महाकाव्यं समाप्तम् ॥**

# CORRIGENDA AND ADDENDA.

P. 3 s'l. 21, for सारदा° read शारदा°.

P. 5 s'l, 52, — °रच्र्यमाणः — रच्र्यमानः.

P. 5 s'l. 52, note add स्व:सुन्दरीविन्दि° MS.

P. 7 s'l, 70, for निबिडत्व° read निविडत्व°.

P. 9 s'l. 98, for चक्रेस्य read धत्तेस्म.

P. 11 s'l. colophon for त्रिभुवनल्ल read त्रिभुवनमल्ल°.

P. 16 s'l. 54, for समं ततः read समन्ततः. (Bhîmâchârya).

P. 24 s'l. 39, for ज्येष्ठे read ज्येष्ठो.

P. 30 s'l. 27, for भालका° read भळका°.

P. 30 s'l. 29, for चेङ्कि read वेङ्कि.

P. 31 s'l. 31, for वार्तेव read वार्त्तेव.

P. 31 s'l. 35, for °धारिताम् read धीरिताम्.

P. 38 s'l. 118, for कुपितो read कुपितः.

P. 39 s'l. 5, for कर्मलुब्ध° read कर्म लुब्ध°.

P. 41 s'l. 25, for °मर्पयद्धन read मर्पयन्ध°.

P. 49 s'l. 26, for चेङ्कि° read वेङ्कि.

P. 51 s'l. 49, for रवम° read रजम°.

P. 55 s'l. 91, for °मत्यसाध्यम् read °मस्त्यसाध्यम्. (Bhîmâchârya).

P. 57 s'l. 17, for रवन्ध्य° read रवन्ध्य°.

P. 59 s'l. 37, for पुष्पोत्कर° read पुष्पोत्कर.

P. 60 s'l. 51, for घूर्णमाना मू° read घूर्णमानामू°.

52, for उदञ्चयत्किं° read उदञ्चयन्कि°.

P. 61 s'l. 63, for जगत्रये read जगत्त्रये.

P. 64 s'l. 77, for विहरविधुर° read विरहविधुर°.

P. 65 s'l. 15, for °दूरूभ्यां read °दूरूभ्यां.

P. 78 s'l. 40, for °गुणायवाद्भिः read गुणायाधिद्भिः.

| | | | | |
|---|---|---|---|---|
| P. 87 s′l. | 14, | for °भुजङ्ग° | read | भुजंग. |
| | 16, | for °खण्डितानान् | read | °खण्डितानाम्. |
| P. 93 s′l. | 89, | for °मृगेक्षणनां | read | °मृगेक्षणनानां. |
| P. 107 s′l. | 32, | for °रेणकासु | read | °रेणुकासु. |
| P. 113 s′l. | 19, | for °रोपपम् | read | रोपमम्. |
| P. 113 s′l. | 23, | for वसुन्धवरा° | read | वसुंधरा°. |
| P. 120 s′l. | 89, | for °वैडूर्य | read | वैदूर्य°. |
| P. 120 s′l. | 4, | for चोङ्घ्रि° | read | वोङ्घ्रि°. |
| P. 139 s′l. | 33, | for गिरिच्छलीषु | read | गिरिस्थलीषु. |
| P. 143 s′l. | 9, | for °प्रतिष्टा | read | °प्रतिष्ठा°. |
| P. 146 s′l. | 48, | for °दंशे | read | °दंसे. |
| P. 148 s′l. | 67, | for °माशुपला° | read | माशु पला°. |
| P. 166 s′l. | 101, | for न्नासत्ति° | read | °न्नासीत्त°. |

---

## Introduction.

P. 26 line 9, for "reign" read "realm".
P. 46 ,, 12 ,, "by" ,, "by".

---

# Bombay Sanskrit Series.

EDITED UNDER THE SUPERINTENDENCE OF

G. BÜHLER, Ph. D., Educational Inspector, N. D.

AND

F. KIELHORN, Ph. D., Professor of Oriental Languages, Deccan College.

## Already published.

No. I. PANCHATANTRA IV. AND V.,—Edited with Notes by G. BÜHLER, Ph. D. Re. 1–2.

No. II. NÂGOJÎBHAṬṬA'S PARIBHÂSHENDUS'EKHARA,—Edited and explained by F. KIELHORN, Ph. D., Part I., the Sanskṛit Text and Various Readings. Rs. 2–12.

No. III. PANCHATANTRA II. AND III.,—Edited with Notes by G. BÜHLER, Ph. D. Re. 1–10.

No. IV. PANCHATANTRA I.,—Edited with Notes by F. KIELHORN, Ph. D. *Second Edition.* Re. 1–4.

No. V. KÂLIDÂSA'S RAGHUVAMS'A, with the Commentary of Mallinâtha,—Edited with Notes by SHANKAR P. PANDIT, M. A.; Part I., Cantos I.—VI. Rs. 2–4.

No. VI. KÂLIDÂSA'S MÂLAVIKÂGNIMITRA,— Edited with Notes by SHANKAR P. PANDIT, M. A. Rs. 2–2.

No. VII. NÂGOJÎBHAṬṬA'S PARIBHÂSHENDUS'EKHARA,—Edited and explained by F. KIELHORN, Ph. D.; Part II. Translation and Notes. Paribhâshâs I.—XXXVII. Rs. 2–4.

No. VIII. KÂLIDÂSA'S RAGHUVAMS'A, with the Comment-

ary of Mallinâtha,—Edited with Notes by SHANKAR P. PANDIT, M. A., Part II., Cantos VII.—XIII. Rs. 2–8.

No. IX. NÂGOJÎBHAṬṬA'S PARIBHÂSHENDUS'EKHARA,—Edited and explained by F. KIELHORN, Ph. D., Part II., Translation and Notes. Paribhâshâs XXXVIII.—LXIX. Re. 1–8.

No. X. DAṆḌIN'S DAS'AKUMÂRACHARITA,—Edited with critical and explanatory Notes by G. BÜHLER, Ph. D., Part. I. Re. 1–8.

No. XI. BHARTṚIHARI'S NÎTIS'ATAKA AND VAIRÂGYA-S'ATAKA,—with extracts from two Sanskrit Commentaries,—Edited with Notes by KÂS'INÂTH T. TELANG, M.A. Re. 1–12.

No. XII. NÂGOJÎBHAṬṬA'S PARIBHÂSHENDUS'EKHARA,-Edited and explained by F. KIELHORN, Ph. D., Part II., Translation and Notes. Paribhâshâs LXX.—CXXII. Re. 1—4.

No. XIII. KÂLIDÂSA'S RAGHUVAṂS'A, with the Commentary of Mallinâtha,—Edited with Notes by SHANKAR P. PAṆḌIT, M. A., Part III., Cantos XIV-XIX. Rs. 2.

No. XIV. BILHAṆA'S VIKRAMÂNKADEVACHARITA.—By G. BÜHLER, Ph. D. Re. 1—5.

## In the Press.

MÂLATÎMÂDHAVA, with a Sanskrit Commentary,—Edited by R. G. BHÂṆḌÂRKAR, M. A.

KÂLIDÂSA'S VIKRAMORVAS'Î by SHAṄKAR P. PAṆḌIT, M.A.

## In Preparation.

VIS'ÂKHADATTA'S MUDRÂRÂKSHASA, by KÂS'INÂTH T. TELANG, M. A.

